ISBN

# ज्योतिषरश्मिः

## संरक्षकः

प्रो. परमेश्वरनारायणशास्त्री

## प्रधानसम्पादकः

प्रो.सुदेशकुमारशर्मा

## सम्पादकौ

डॉ. आशीषकुमारचौधरी,

डॉ. अनिरुद्धनारायणशुक्लः च ।



राष्ट्रियसंस्कृतसंस्थानम्

( मानितविश्वविद्यालयः )

NAAC द्वारा ‘A’ श्रेण्यां प्रत्यायितम्

क. जे. सोमैया संस्कृतविद्यापीठम्

विद्याविहारः, मुम्बई - ४०० ०७७

| | |
|---|---|
| **Publisher** | **The Principle**<br>**Rashtriya Sanskrit sansthan**<br>**(Deemed University)**<br>**K.J.Somaiya Sanskrit Vidyapeetha,**<br>**Vidyavihar, Mumbai – 400 077** |
| **Editorial Bord** | **Prof. Prakashchandra**<br>**Prof.Bodh Kumar**<br>**Dr.E.R.Narayanan**<br>**Dr.Ashish Kumar Choudhary**<br>**Dr.Aniruddh Narayan Shukla**<br>**Dr. Swarg Kumar Mishra** |
| **Typing** | **Shri. Sachin Shinde.** |
| **Page Desingn** | **Rakesh Singh** |
| **Email** | **rsksmumbai@yahoo.com** |
| **©** | **Publisher** |
| **Edition** | **2017** |
| **ISBN** | |
| **Copies** | **100** |
| **Price** | |
| **Printed by** | **Specific Printer**<br>**z-23,zone-1,M.P.Nagar**<br>**Bhopal-462011**<br>**Ph-0755-4234805** |
| **Email** | **pecificprint@gmail.com** |

**प्रो. पी. एन्. शास्त्री**, कुलपति
**राष्ट्रिय संस्कृत संस्थान**
(मानित विश्वविद्यालय)
(मानव संसाधन विकास मंत्रालय,
भारत सरकार के अधीन)
**( 'ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं प्रत्यायन परिषद द्वारा मान्यता प्राप्त )**




**Prof. P. N. Shastry**
Vice-Chancellor
**RASHTRIYA SANSKRIT SANSKTHAN**
Deemed to be University
(Under MHRD, Govt. of India)
**(Accredited by NAAC with 'A' Grade)**

---

# आशीर्वचनम्

इष्टफलप्राप्तिपूर्वकयज्ञकर्मसम्पादनार्थं समुचितकालोऽपेक्ष्यते । वेदपुरुषस्य चक्षूरूपं शास्त्रं भवति ज्योतिषशास्त्रम् । नेत्रं विना कर्णनासादिभिः संयुतः मानवः किमपि कार्यं कर्तुं न शक्नोति । ग्रन्थोऽयं सरस्वतीसमाराधनसमर्पितानां विदुषां जिज्ञासूनां छात्राणां च कृते महते लाभाय स्यादिति मन्ये । अत्रावसरे क. जे. सोमैयापरिसरस्य ज्योतिषविभागमहं हृदयेनाशंसामि इति ।

प.ना. शास्त्री

**( प्रो. परमेश्वरनारायणशास्त्री )**

**राष्ट्रिय संस्कृत संस्थान**
(मानित विश्वविद्यालय)
(मानव संसाधन विकास मंत्रालय,
भारत सरकार के अधीन संचालित)
**जयपुर परिसर**
त्रिवेणीनगर, गोपालपुरा बाईपास,
जयपुर - 302018 (राजस्थान)
**NAAC द्वारा 'A' ग्रेड प्राप्त**



**RASHTRIYA SANSKRIT SANSKTHAN**
Deemed to be University
(Under Ministry of HRD, Govt. of India)
**Jaipur Campus**
Triveni Nagar, Gopalpura Buypass
Jaipur & 302018 (Rajsthan)
**(Accredited by NAAC with 'A' Grade)**

# शुभाशंसनम्

राष्ट्रियसंस्कृतसंस्थानस्य मुम्बईपरिसरस्य ज्यौतिष-विभागेन प्रकाशमानोऽयम् 'ज्योतिरश्मिः' इति नामधेयः ग्रन्थः गतवर्षीयज्योतिषरश्मिपत्रिकास्वरूपस्थाने पुंस्त्वभावसम्पन्नः ग्रन्थस्य रूपोऽयम् पुरुषः ज्योतिषशास्त्रीयकालरूपवत् महत्त्व-पूर्णस्वरूपे समुपस्थितः । 'चक्षुष्मन्तोऽनुपश्यन्ति नेतरे तद्विदो इत्युक्त्या ज्यातिषरश्मेः नूतनस्वरूपः ज्योतिर्विदाम्, शोधार्थिनाम्, ज्योतिषछात्राणाञ्च महदुपकाराय भविष्यतीत्याशासे । अस्मिन् समावेशिताः लेखाः शोधपत्राणि च संहितादिशास्त्रधिया ज्ञानसंवर्धने सहायकाः भविष्यन्तीत्याशयेन शुभाशंसनम् वितरनः प्रसन्नतामनुभवतः मामुद्यते मे चेतः । एतदर्थं विभागीयान् डा. आशीषकुमारचौधरीमहोदयान् डॉ. अनिरुद्धनारायणशुक्लादीन् अभिनन्दामि ।'

**भावत्कः**

(**प्रो. वासुदेवशर्मा**)

राष्ट्रिय संस्कृत संस्थान
(मानित विश्वविद्यालय)
(मानव संसाधन विकास मंत्रालय,
भारत सरकार के अधीन संचालित)
क. जे. सोमैया संस्कृत विद्यापीठ
213, पॉलिटेक्निक भवन, (द्वितीय तल)
विद्याविहार, पूर्व, मुम्बई - 400 077
NAAC द्वारा 'A' ग्रेड प्राप्त



RASHTRIYA SANSKRIT SANSKTHAN
Deemed to be University
(Under Ministry of HRD, Govt. of India)
K. J. Somaiya Sanskrit Vidyapeeth
213, Polytechnic Building, (IInd Floor)
Vidyavihar, East, Mumbai – 400 077
(Accredited by NAAC with 'A' Grade)

# शुभाशंसनम्

कालं विहाय कोऽपि जीवः जगति न स्थातुं शक्नोति । तत्कालज्ञानं ज्योतिषशास्त्रं विना भवितुर्महति, 'कालतन्त्रं जगुः' उक्तिरियं वर्तते, अर्थात् कालविधानशास्त्रं ज्योतिषशास्त्रमिति । यथा –

**वेदा हि यज्ञार्थमभिप्रयुक्ताः कालानुपूर्वा विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेत्ति स वेद यज्ञान् ॥**

सन्त्यत्र ज्योतिषशास्त्रस्य बहूनि प्रयोजनानि, शास्त्रेणानेन मानवस्य बहुविधकार्यस्य सिद्धिर्जायते । तज्ज्योतिषशास्त्रे त्रिषु स्कन्धकेषु संहिता–स्कन्धस्य महन्महत्त्वं वरोवर्ति । आकाशीयस्थितीनां (दिग्दाहादि–परिवर्त्तनानां) कृषिवृष्ट्यादोनां समाजाय महत्यावश्यकतास्तीति हेतोः शास्त्रमिदं सर्वथा अनुकरणीयं विचारणीयं प्रसारणीयञ्चेति मे मतिः । शास्त्रजिज्ञासूनां छात्राणामध्यापकानां लोकानाञ्च ज्ञानाभिवृद्ध्ये राष्ट्रियसंस्कृत–संस्थानम्, क. जे. सोमैया संस्कृतविद्यापीठस्य ज्योतिषविभागे **ज्योतिषरश्मिः** इति नाम्ना वार्षिकशोधग्रन्थः प्रकाश्यते ।

एतदर्थमाशीर्वचोभिः स्वीयं विचारं वितनोमि । परिसरस्य ज्योतिषविभागस्य सरस्वतीसमुपासकानां प्राध्यापकानां छात्राणाञ्च ज्ञानवर्धनमहं कामये ।

**( प्रो. सुदेशकुमारशर्मा )**

# सम्पादकीयम्

**स जयति सिन्धुरवदनो देवो, यत्पादपङ्कजस्मरणम् ।**
**वासरमणिरिव तमसां, राशीन्नाशयति विघ्नानाम् ॥**

प्रकृतिरियं मानवस्य सः सर्वदा स्वकीयं भविष्यं जिज्ञासते। एतस्मिन् सन्दर्भे ज्योतिषशास्त्रं तस्य मार्गं प्रकाशयति । वेद-प्रतिपादितानि सर्वाण्यपि यज्ञादिकर्माणि कालाधीनानि । तस्य काल-स्यावबोधो यतो ज्योतिषशास्त्रादेव सम्पाद्यतेऽतो ज्योतिषस्य वेदाङ्गत्वं युक्तियुक्तमेव । सर्वविधलौकिकपारलौकिककार्यसम्पादनाय मानव-जीवनगतशुभाशुभफलज्ञानाय च वेदस्य चक्षूरूपात्मकं शास्त्रमिदं परमोपयागि विद्यत । तत्र वेदस्य षडङ्गानि यथोक्तं भास्करेण –

**शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी, श्रोत्रमुक्तं निरुक्तं कल्पः करौ ।**
**या तु शिक्षाऽस्य वेदस्य सा नासिका, पादपद्मद्वयं छन्दआद्यैर्बुधैः ॥**

तत्रापि यथाऽन्धोऽकिञ्चित्करस्तथैव वेदनयनज्योतिर्ज्ञान-विहीनो जनोऽपि । अत एवोक्तं भास्करेणैव –

**वेदचक्षुः किलेदं स्मृतं ज्योतिषं**
**मुख्यता चाङ्गमध्येऽस्य तेनोच्यते ।**
**संयुतोऽपीतरैः कर्णनासादिभि**
**श्चक्षुषाङ्गेन हीनो न किञ्चित्करः ॥**

अपि च –

**अप्रत्यक्षाणि शास्त्राणि विवादस्तु केवलम् ।**
**प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥**

ज्योतिषशास्त्रस्य संहितास्कन्धस्य महत्त्वं सर्वाधिकं परिकल्प्य आचार्यवराहमिहिरेण प्रथमतया संहितास्कन्धोऽयं परिगणितः । सिद्धान्त-होरास्कन्धयोः स्वरूपं विषयदृष्ट्या संक्षिप्त-

रूपेण प्राप्यते परञ्च संहितास्कन्धस्य स्वरूपम् अतीव बृहद्रूपेण दृश्यते । संहितायां सूर्यादिग्रहचारप्रकृतिविकृतिप्रमाणाकृतिकिरणो-दयास्तमार्गवक्रसमागमयुद्धसप्तर्ष्यादिचारवायुवृष्टिसन्ध्याविद्युद्दिग्दाहभूकम्परजनिर्घातवृक्षलतागुल्मवास्तुइत्यादिसांसारिकाणां शुभाशुभफलानि प्रतिपाद्यन्त इति ।

अत्र संकलितलेखाः राष्ट्रियसंस्कृतसंस्थानस्य मुम्बई परिसरे 2017 तमे वर्षे मार्चमासस्य सप्तमाष्टमदिनाङ्कयोः ज्योतिष-विभागस्यान्तर्गतायां 'संहितास्कन्धे जलविज्ञानविमर्शः' इति विषय-माश्रित्य समायोजितायां राष्ट्रियसंगोष्ठ्यां पठिताश्चर्चिताश्च । प्रो. ईश्वरभट्टः (जयपुरम्), प्रो. भारतभूषणमिश्रः (भोपालम्), डॉ धनञ्जयमिश्रः (देहली), डॉ. के. महेश, आई, आई, टी. (मुम्बइ) प्रभृतयः विद्वांसः अत्रोल्लेख्याः आसन् ।

तदत्र ज्योतिषशास्त्रस्य विदुषां छात्राणाञ्चोपकाराय तत्तद्वि-द्वत्प्रवरवाचितानां शोधपत्राणां ग्रन्थाकारत्वेन प्रकाशनं क्रियते । तान् सर्वान् मान्यान् अतिथिवर्यान् विपश्चिदपश्चिमान् विशिष्य एतत्सारस्वतकर्मकारणभूतान् प्राचार्यवर्यान् प्रति श्रद्धावनतेन शिरसा प्रमाणाञ्जलिं विनिवेदयन् - करुणावरुणालयान् सुधीवरान् प्रकाशनाशेषदोषाणां कृते क्षमां विनयावनतोऽभ्यर्थ्य विरम्यते विस्तरादिति शम् ।

**चैत्रशुक्ल प्रतिपदा २०६४** **सम्पादकः**



# विषयानुक्रमणिका





# प्रशस्ते ज्यौतिषे शास्त्रे प्रशस्तौ गुरुभार्गवौ

✍प्रो. हंसधरझाः

विदितमेव सर्वैर्यज्ज्यौतिषां ग्रहनक्षत्रादीनां गतिस्थित्यादिकमधिकृत्य कृतं शास्त्रं ज्यौतिषशास्त्रमिति । तत्र ब्रह्माण्डोदरमध्यगता ये खलु चराचरजीवाः पदार्था वा तेषु पञ्चमहाभूतानि, त्रयो गुणाः, सप्तधातवश्च ग्रहनक्षत्रप्रभावादेव जायन्ते । क्वचित्पार्थिवांशाधिक्यं, क्वचिज्जलांशाधिक्यं, क्वचिदग्न्यंशाधिक्यं, क्वचिद्वायोरंशः, क्वचिदाकाशस्य भागः, एवञ्च क्वचित् सत्त्वग्रहप्रभावाधिक्यात् सत्त्वगुणांशोऽधिकः, क्वचिद्रजोगुणग्रहप्रभावाधिक्याद्रजोगुणाधिक्यं, क्वचिच्च तमोगुणग्रहप्रभावाधिक्यात् तमोगुणांशोऽधिकः । यथोक्तमपि वराहमिहिरेण

**गुरुशशिरवयः सत्त्वं रजः सितज्ञौ तमोऽर्कसुतभौमौ ।**
**एतेऽन्तरात्मनः स्वां प्रकृतिं जन्तोः प्रयच्छन्ति ॥**

एवञ्च यस्योपरि सूर्यग्रहस्य कुप्रभावाधिक्यं भवेत् स पित्तरोगी, यस्योपरि चन्द्रस्य कुप्रभावः स कफात्मकः, यः खलु भौमकुप्रभावाधिक्यं वहते स रक्ताधिकः, एवमन्येऽपि ग्रहाः स्वभावादिषु वैभिन्यं भजन्ते येन मानवा अपि वैलक्षण्यं गच्छन्ति स्वभावदृष्ट्या भूतलेऽत्र । एवं ग्रहनक्षत्रप्रवादेव केचित्स्थूलाः, केचिद्दुर्बलाः, केचिद्दीर्घाः, केचिद् वामनाः, केचिदन्धाः, केचिद् बधिराः एवं बहुविधा भवन्ति जना जीवा वा । अत एव बृहस्पतिना कथितमपि 'ग्रहाधीनं जगत्सर्वम्' इति । भारतीया महर्षयस्तु ईश्वरग्रहयोरभेदत्वमङ्गीकुर्वन्ति । यथा महर्षिपराशरः -

**रामः कृष्णश्च भो विप्र नृसिंहः सूकरस्तथा ।**
**एते पूर्णावतारश्च ह्यन्ये जीवांशका मताः ॥**
**अवताराण्यनेकानि अजस्य परमात्मनः ।**
**जीवानां कर्मफलदो ग्रहरूपी जनार्दनः ॥**

अर्थात्तन्मते रामः कृष्णः नृसिंहः वराहश्चौते चत्वारः परमात्मनः पूर्णावताराः सन्ति । तद्भिन्नावतारेषु तस्य परमात्मनः जीवांशोऽपि सम्मिलितोऽस्ति । एवमजन्मनः परमेश्वरस्यानेकेऽवताराः सन्ति, यत्र

प्राणिनां स्वकृतकर्मफलदातृत्वेन सूर्यादिग्रहरूपजनार्दननामकोऽवतारो विद्यते। तत्र सूर्याद्रामस्य, चन्द्रात् कृष्णस्य, कुजान्नृसिंहस्य, बुधाद् बौद्धस्य, गुरोर्वामनस्य, शनैश्चरात् कूर्मस्य, राहोर्वराहस्य, केतोश्च मीनस्यावतारो जातोऽस्ति । एतदतिरिक्ता अपि अवतारा ग्रहेभ्यो जाताः सन्ति । तत्र येषु परमात्मनोंऽशाधिक्यमस्ति ते खेचरा देवाः कथ्यन्ते, यस्मिन् हि जीवांशोऽधिकोऽसौ जीवः कथ्यते । सूर्यादिग्रहेभ्य एव परमात्मांशादिका निःसृत्य पूर्णावतारा भवन्ति । यथा बृहत्पाराशरहोराशास्त्रे –

**रामोऽवतारः सूर्यस्य चन्द्रस्य यदुनायकः ।**
**नृसिंहो भूमिपुत्रस्य बुद्धः सोमसुतस्य च ॥**
**वामनो विबुधोज्यस्य भार्गवो भार्गवस्य च ।**
**कूर्मो भास्करपुत्रस्य सैंहिकेयस्य सूकरः ॥**
**केतोर्मीनावतारश्च ये चान्ये तेऽपि खेटजाः।**
**परात्मांशोऽधिको येषु ते सर्वे खेचराभिधाः ॥**
**जीवांशकता येषु जीवास्ते वै प्रकीर्तिताः ।**
**सूर्यादिभ्यो ग्रहेभ्यश्च परमात्मांशनिः सृताः ॥**

शाङ्धारमते देवा एव ग्रहाणां रूपाणि धात्वा नराणां पूर्वार्जितानि स्वकीयानि शुभाशुभफलानि प्रयच्छन्ति । यथा –

**देवता ग्रहरूपेण मनुष्याणां शुभाशुभम् ।**
**फलं प्रागर्जितं यच्च तद्ददाति स्वकीयकम् ॥**

लल्लाचार्यमते समस्तनक्षत्रग्रहमण्डलं भूमिं च ब्रह्मा निर्माय आकाशे स्थापयामास । तद्ग्रहमाध्यमेनैव जनाः शुभाशुभानि फलानि लभन्ते । यथा –

**सकलमपि धिष्ण्यमण्डलमवनिबद्धं विनिर्मितं धात्र ।**
**तत्र ग्रहा ग्रहेष्वपि शुभाशुभं सर्वजन्तूनाम् ॥**

एवमेव सिद्धान्तशिरोमणौ –

**सृष्ट्वा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः ।**
**शश्वदभ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा धरुवत्वे ॥**

बृहस्पतिना त्वेवमुक्तम् –

**ग्रहाधीनं जगत्सर्वं ग्रहाधीना नरा वराः ।**

**कालज्ञानं ग्रहाधीनं ग्रहाः कर्मफलप्रदाः ॥**
**सृष्टिरक्षणसंहाराः सर्वे चापि ग्रहानुगाः ।**
**कर्मणां फलदातारः सूचकाश्च ग्रहाः सदा ॥**

एवं मानवानामुन्नतिरवनतिर्वा सर्वमपि ग्रहाधीनमतो ग्रहा इमे पूज्यतमा । यथा वशिष्ठः -

**उच्छयपतनानि नृणां खचराधीनानि विशेषतो यस्मात् ।**
**अखिलानामपि लोकानां वृद्धिस्तस्माद् ग्रहाश्च पूज्यतमाः ॥**

यतो ह्येवंभूतानां लोकोपयोगिनां परमात्मनोंऽशवतां ग्रहाणां गतिस्थित्यादीनां प्रतिपादकमिदं ज्यौतिषशास्त्रमतोऽस्य शास्त्रस्यातीव महत्त्वमिति स्पष्टमेव । शास्त्रमेतद् वेदपुरुषस्य नेत्रत्वेनाख्यातम् । यथा भास्काराचार्यः -

**शब्दशास्त्रं मुखं ज्यौतिषं चक्षुषी श्रोत्रमुद्रं निरुक्तं च कल्पः करौ ।**
**या तु शिक्षास्य वेदस्य सा नासिका पादपद्ममद्वयं छन्द आद्यैर्बुधैः ॥**
**एवमेव पाणिनिशिक्षायामपि -**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**ज्यौतिषामयनं चक्षुर्निरुक्तं श्रोतमुच्यते ॥**
**छन्दः पादौ तु वेदस्य हस्तौ कल्पः प्रचक्षते ॥**

तत्रपि षङ्गेषु शास्त्रस्यास्य प्राधान्यमस्ति । यतो वेदाः खलु यज्ञकर्मार्थं प्रवृत्ताः सन्ति तथा यज्ञा हि कालानुरोधेन सम्पद्यन्ते तथा कालज्ञानं हि ज्यौतिषशास्त्रदेव भवति । एवं शास्त्रमिदं वैदिककर्मानुगमने कालज्ञानरूपमार्गदर्शनं करोतीतिहेतोः शास्त्रस्यास्य वेदाङ्गत्वमपि । अत एवोक्तं भास्कराचार्येण -

**वेदचक्षुः किलेदं स्मृतं ज्यौतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते ।**
**संयुतोऽपोतरैः कर्णनासादिभिश्चक्षुषाङ्गेन होनो न किञ्चित्करः॥**

अत्र विशिष्टोऽप्येवमेवाह -

**वेदस्य चक्षुः किल शास्रमेतत् प्रधानताङ्गेषु ततोऽर्थजाता ।**
**अङ्गैर्यतोऽन्यैः परिपूर्णमूर्तिश्चक्षुर्विहीनः पुरुषो न किञ्चित् ॥**

वस्तुतः पक्षपातरहितधिया इति कथने नाल्पीयसि वाच्यता भवति यदेतच्छास्त्राध्ययनं शास्त्रन्तराध्ययनापेक्षया नितरामावश्यकमिति ।

यत एतच्छास्त्रज्ञानं विना लौकिकं वैदिकं वा किमपि कर्म न सिध्यति । लोके वेदे च पदे पदे प्रयोजनं भवति शास्त्रस्यास्य । यथा नारदः –

**वेदस्य निर्मलं चक्षुर्जयौतिषशास्त्रमकल्मषम् ।**
**विनैतदखिलं कर्म श्रौतं स्मार्तं न सिद्धयति ॥**
**तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥**

अपि च –

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवल ।**
**प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥**

अत एवोक्तं वेदाङ्गज्योतिषे –

**यथा शिखा मयूराणां नागानां मणयो यथा ।**
**तद्वद्वेदाङ्गशास्त्राणां ज्यौतिषं मूर्ध्नि संस्थितम् ॥**

एवं सूर्यसिद्धान्तेऽपि –

**वेदाङ्गमग्रयमखिलं ज्योतिषां गतिकारणम्।**

अहो शास्त्रमेतन्नहि लौकिकदृष्ट्यैव हितकरं किन्तु पारलौकिकदृष्ट्यापि हितकरमेव। यथोक्तं वराहमिहिरेण –

**न सांवत्सरपाठी च नरके परिपच्यते ।**
**ब्रह्मलोकप्रतिष्ठां च लभते दैवचिन्तकः ॥**

एवं भगवता सूर्येणाप्युक्तम् –

**दिव्यं चक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम् ।**
**विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम् ॥**

तत्रैव गर्गोऽपि –

**ज्यौतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् ।**
**ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिम् ॥**

एवमुपर्युक्तविवेचनया नात्र सन्देहो यज्ज्यौतिषशास्त्रमिदमनुत्तमं शास्त्रम् । अर्थाल्लोके वेदे च शास्त्रमिदं प्रशस्यत इति ।

एवं प्रशस्तेऽस्मिज्ज्योतिषशास्त्रे रविचन्द्रयोस्तु मुख्यत्वं वर्तते एव, गुरुशुक्रयोरप्यनल्पमेव स्थानं दरीदृश्यते तत्र । बृहस्पतेः खल्वन्वर्थं नाम कृतं प्राच्यैर्गुरुरिति । ज्योतिषशास्त्रमर्मज्ञेनार्वाचीनविदुषा स्वनामधन्येन श्रीअर्कसोमयाजिधूलिपालमहोदयेनापि प्रतिपादितं यत् – 'सर्वेषामपि ग्रहाणां

गुरुतमो गुरुरेव । तत्र सर्वेषां ग्रहाणां द्रव्यमाहत्य यावद् भवति तावदधिकद्रव्यवान् गुरुः । ग्रहाणां मध्ये शुक्रं विना गुरुरेवाधिकप्रकाश इत्यपि प्रतिपादितं श्रीअर्कसोमयाजिना ।।' इदमेव कारणं यद् गुरोः प्रभावोऽपि तथैव बाहुल्येनापतति पृथिव्याम् ।

अथ शुक्रो हि बृहस्पतेरपि अधिकप्रकाशः परन्तु लघुबिम्बः । शुक्रोऽयं जातकशास्त्रे वीर्याधिपतिः कथितः । यतो हि शरीरे वीर्यं निखिलानामपि देहधारिणां कृते परमावश्यकं तत्त्वं तथा तद्वीर्यस्याधिपतिः शुक्रः, अतो जीवने शुक्रानुकूल्यं नूनमपेक्षितं स्यादेवेत्यपि स्पष्टमव विदाम्। इदमेव कारणं यद् बृहस्पतेरनन्तरं शुक्रस्यैव दृश्यते खलु विचारो द्विरागमादिकर्मविशेषेषु ।।

एवं ज्यौतिषशास्त्रे रविचन्द्रानन्तरं गुरुशुक्रयोरेव महत्त्वं प्रतिपादितम् । यथा –

**राहुदोषं बुधो हन्यादुभयोस्तु शनैश्चरः ।**
**त्रयाणां भूमिजो हन्ति चतूर्णां दानवार्चितः ।।**
**पञ्चानां देवमन्त्री च षण्णां दोषन्तु चन्द्रमाः ।**
**सप्तदोषं रविर्हन्ति विशेषादुत्तरायणे ।।**

इदमेव कारणं यदेकोऽपि केन्द्रस्थो गुरुर्बहून दुष्टयोगान्नाशयति । तथोक्तमपि –

**किं कुर्वन्ति ग्रहाः सर्वे यस्य केन्द्रे बृहस्पतिः ।**
**मत्तमातङ्गयूथानां शतं हन्ति च केसरी ।।**

अपि च –

**शुक्रो दशसहस्राणि बुधो दशशतानि च ।**
**लक्षमेकं तु दोषाणां गुरुर्लग्ने व्यपोहति ।।**

अथ संवत्सरशब्दः प्रायः सुपरिचित एव लोके । अतिचारविलुप्ताब्दादिविचारे संवत्सरविचारो मुख्यस्तथा संवत्सरविचारो गुरुचाराधीनः । अर्थान्मध्यमबृहस्पतेरेकराशिभोगकालो गौरवं वर्षं संवत्सरनामकं भवति । यथा भास्काराचार्यः –

**बृहस्पतेर्मध्यमराशिभोगात् संवत्सरं सांहितिका वदन्ति ।**

एवं वशिष्ठोऽपि –

**मध्यगत्या भभोगेन गुरोर्गौरववत्सरः ॥**

इदं हि बार्हस्पत्यवर्षं (कल्पकुदिनैः बृहस्पतेः कल्पभगणाः लभ्यन्ते तदा कुदिनेनैकेन किमिति फलमेकस्मिन् दिने गुरोर्गतिमानमतो यद्यनया गत्यैकं दिनं तदा मध्यगुरुराशिकलाभिः किमित्यनुपातेन) 361/02/04/45 सावनदिनाद्यात्मकं भवति । अस्मात्संवत्सरमानात् सावनाब्दः 1/2/4/45 सावनदिनादिना लघुस्तथा सौराब्दः 4/13/25/37 सावनदिनादिना महान् भवति । तत्र स्पष्टो गुरुर्यदि एकस्मिन् वत्सरे एकराशिसञ्चरणं करोति तदाऽसौ शुद्धः संवत्सरः कथ्यते । संवत्सरा इमे सृष्ट्यादिकालादारभ्य क्रमेण विजयादयः षष्ठि भवन्ति । अत एव गतगुरुराशिषु षष्टिभक्तेषु शेषतुल्या विजयादयो गतसंवत्सरा भवन्ति । यथोक्तमपि सूर्यसिद्धान्ते –

**द्वादशघ्ना गुरोर्याता भगणा वर्तमानकैः ।**
**राशिभिः सहिताः शुद्धाः षष्ट्या स्युर्विजयादयः ॥**

चेद् बृहस्पतिरेकस्मिन्नेव संवत्सरे (361/02/04/45) दिनाद्यन्तरे द्विराशिसञ्चरणं कृत्वा पुनः पूर्वराशिं नागच्छति तदासौ महातिचारो लुप्तसंवत्सरश्चोच्यते । यदि द्वाराशिसञ्चरणं कृत्वा वक्रत्वं प्राप्य पूर्वराशिमागच्छति तदासौ अतीचारः कथ्यते । यथा हि संहितायाम् –

**यत्रैकराशिसञ्चारो मार्गत्या गुरोर्भवेत् ।**
**शुद्धः संवत्सरः स स्यात् सर्वेषां च शुभप्रदः ॥**
**यत्र द्विराशिसञ्चारो ह्यतीचारः स कथ्यत ।**
**लुप्ताब्दश्च यदाब्दान्ते पूर्वभं नैति वक्रितः ॥**
**महातिचारसंज्ञोऽसौ सर्वलोकभयङ्करः॥**

एवञ्च म.म. महेशठक्कुरः –

**पूर्वराशिं परित्यज्यापूर्णे संवत्सरे गुरुः ।**
**अतीचारः स विज्ञेयः परराशिगतो यदि ॥**

व्यवहारसमुच्चयेऽपि – तत्रैव

**अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः ।**
**लुप्तसंवत्सरो ज्ञेयः गर्हितः सर्वकर्मसु ॥**

अत्र गुरुणा तूक्तं यन्मेष वृषकुम्भमीनेषु पूर्वराशेः सकाशात् महातिचारेणायाति पूर्वराशिं च नैति तदा न लुप्तसंवत्सरदोषः । यथा तत्रैव –

**मेषे वृषे झषे कुम्भे यद्यतीचारगे गुरौ ।**

**न तत्र कालदोषः स्यादित्याह भगवान् यमः ॥**

नहि राशिभेदेनैव परिहारः किन्तु देशभेदेनापि विद्यते परिहारः । तत्र पीयूषधारायां लिखितं यदत्रिमते केवलं गङ्गानर्मदानद्योर्मध्यवर्तिदेश एव लुप्ताब्ददोष इति । तथा तत्रैव

**लुप्ताब्ददोषोऽत्रिमतेन मध्ये सोमोद्भावायाः सुरनिम्नगायाः ।**

अत एवोक्तं श्रीरामचार्येण –

**गोऽजान्त्यकुम्भेतरभेऽतिचारगो नो पूर्वराशिं गुरुरेति वक्रितः ।**

**तदा विलुप्ताब्द इहातिनिन्दितः शुभेषु रेवासुरनिम्नगान्तरे ॥**

केषाञ्चिन्मते लुप्तसंवत्सरदोषः केषुचिद्राशिषु अतिशयेन भवति। यथा सारसागरे –

**अतिचारगते जीवे धनुः कर्कटमोनगे ।**

**लुप्तसंवत्सरो ज्ञेयः विवर्ज्यः सर्वकर्मसु ॥**

अथ च गुरुशुक्रयोरनयोरुदयास्तबालवृद्धत्वादि विचारश्चातिशयेन विराजते खलु ज्योतिषशास्त्रे, धर्मशास्त्रे च, संस्कारादिषु उपयोगित्वात् । तत्र ग्रहप्रभावेषु ग्रहाणां स्वभावादयस्तु सन्त्येव कारणभूतास्तेषामुदया-स्तमयत्वञ्चापि भजतेऽतिमहत्त्वम् । तत्रेदयास्तौ द्विविधौ नैत्यिकौ कालां-शापेक्षिकौ च । प्रवहवेगवशाद् भूपरितो भ्रमितग्रहस्य क्षितिजव्यवधानाद् यददृश्यत्वं तदस्तत्वम्, यत्क्षितिजोधयवर्गत्वत्वेन दृश्यत्वं तदेवोदितत्वमिति नैत्यिकौ सावनात्मकावुदयास्तौ । तथा च ईषद्युतिमतां ग्रहकर्षाणां सूर्यसान्निध्यात्तत्प्रखरनिकरप्रभावेण यददर्शनं तत्तेषामस्तमयत्वम्, यच्च सूर्यात्कालांशाधिकान्तरितानां दर्शनं तत्तेषामुदयत्वमिति कालांशापेक्षिका-वुदयास्तौ । अत्र नैत्यिकावुदयास्तौ सूर्यचन्द्रयोर्यथा महत्त्वजनकौ न तथा भैमादीनाम् । किन्तु चन्द्रादीनां तु कालांशवशगावुदयास्तौ महत्त्वजनकौ । तत्र ज्यौतिषशास्त्रे सिद्धान्तशिरोमणौ बृहस्पतेरेकादश शुक्रस्य च दश कालांशाः पठिताः यथा –

**दस्रेन्दवः शैलभुवश्च शक्रा रुद्राः खचन्द्रास्तिथयः क्रमेण ।**

**चन्द्रादितः काललवा निरुक्ता ज्ञशुक्रयोर्वक्रगयोर्द्विहीनाः ॥**

अत्रस्तात्पूर्वं ग्रहाणां वृद्धत्वमुदयात्परञ्च बालत्वं भवतीतिहेतोः गुरुशुक्रयोरपि वृद्धत्वबालत्वयोः कालौ प्रोक्तौ । तत्र शुक्रस्य पूर्वोदयानन्तरं दिनत्रयं यावत्तथा पश्चिमोदयानन्तरं दशदिनानि यावद्बालत्वं भवति । एवं शुक्रो यदि पूर्वस्यामस्तं याति तदा ततः पूर्वं पञ्चदशदिनानि यावत्, यदि पश्चिमायामस्तं याति तदापि पञ्चदशदिनानि यावदेव वृद्धत्वं तिष्ठति । किन्तु गुरोस्तु बाल्यं वृद्धत्वं वा सर्वदैव पञ्चदशदिनात्मकमेवेत्यपि प्रोक्तं श्रीरामाचार्येण । यथा –

**पुरः पश्चाद् भृगोर्बाल्यं त्रिदशाहं च वार्धकम् ।**
**पक्षं पञ्चदिनं पक्षं गुरुः पक्षं च सर्वतः ॥**

एवमेव नारदोऽपि –

**पश्चात्प्रागुदितः शुक्रो दशत्रिदिवसं शिशुः ।**
**वृद्धः पञ्चदिनं पक्षं गुरुः पक्षं च सर्वतः ॥**

आचार्यमहेश्वरमते शुक्रस्य पश्चिमायामुदये सति दशदिनानि यावद् बालत्वम्, अस्ते सति पञ्चदिनात्मकं वृद्धत्वम् । शुक्रो यदि पूर्वस्यामुदेति तदा दिनत्रयात्मकं बालत्वं भवति । केचित्तु गुरोः सर्वदा पञ्चदिनात्मकं वृद्धत्वं शिशुत्वं च कथयन्ति । केचिद्दशदिनात्मकमपरे तु सप्तदिनात्मकं खलु गुरुशुक्रयोर्बाल्यं वृद्धत्वञ्चेति वदन्ति । यथा –

**बालः शुक्रो दिवसदशकं पञ्चकञ्चौव वृद्धः ।**
**पश्चादौ त्रितयमुदितः पक्षमैन्द्रयां क्रमेण ॥**
**जीवो वृद्धः शिशुरपि सदा पक्षमन्यैश्च सूतौ ।**
**वृद्धौ प्रोक्तौ दिवसदशकं चापरैः सप्तरात्रम् ॥**

अत्र केशवार्को यथा –

**क्षिपति सप्तदिनान्युदयास्तयोः ।**
**सुरगुरुर्भृगुजश्च गतैष्ययोः ॥**

अत्र बाल्यवार्द्धक्यविचारे गर्गस्तु देशभेदेन स्वमतं प्रकटितवानस्ति । तद् यथा –

**शुक्रो गुरुः प्राक् परतश्च बालो विन्ध्ये दशावन्तिषु सप्तरात्रम् ।**
**वङ्गेषु हूणेषु च षट् च पञ्च शेषे तु देशे त्रिदिनं वदन्ति ॥**

अर्थाद् विन्ध्याचलपार्श्वस्थप्रदेशे दशदिनात्मकम्, अवन्त्यां (उज्जयिन्याम्) सप्तदिनात्मकम्, वङ्गप्रदेशे षड्दिनात्मकम्, हूण (मेंगोलिया) देशे पञ्चदिनात्मकम्, तथाऽन्यदेशेषु दिनत्रयात्मकं बाल्यं वृद्धत्वञ्चोभयोः स्वीकरणीयमिति । एवमुक्तानि मतानि श्लोकेनैकेन व्यज्यँल्लिखति रामाचार्यः –

**ते दशाहं द्वयोः प्रोक्ते कैश्चित् सप्तदिनं परैः ।**
**त्र्यहं त्वात्ययिकेऽप्यन्यैरर्दधाहं च र्त्यहं विधोः ॥**

एवं गुरुशुक्रयोर्बाल्यवार्धक्यविषये मतवैभिन्यमतोऽत्र देशाचार-व्यवस्थैव स्वीकार्या । यदा खलु गुरुशुक्राविमौ बालौ वृद्धावस्तौ वा भवतस्तदा बहुविधानि श्रौतस्मार्तकर्माणि न विधेयानीति शास्त्रदेशः । यथा मुहुर्त्तचिन्तामणौ –

**वाप्यारामतडागकूपभवनारम्भप्रतिष्ठे व्रताऽ**
**रम्भोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके ।**
**गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं**
**नीलोद्वाहमथातिपन्नशिशुसंस्कारान् सुरस्थापनम् ॥**
**दीक्षामौञ्जितविवाहमुण्डनमपूर्वं देवतीर्थेक्षणं**
**सन्यासाग्निपरिग्रहौ नृपतिसन्दर्शाभिषेकौ गमम् ।**
**चातुर्मास्य समावृती श्रवणयोर्वेधं परीक्षां त्यजेद्**
**वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा ॥**

अर्थाद् गुरुशुक्रयोर्वृद्धत्वास्तशिशुत्वे तथा न्यूनाधिमासे सति वापी दीर्घिका, आरामः उपवनं तडागः पुष्करिणी, कूपः, भवनम् एतेषामारम्भः, प्रतिष्ठा गृहप्रतिष्ठा (गृहप्रवेशः), व्रतारम्भः व्रतोद्यापनम्, षोडशमहादानानि, सोमयागः, अष्टकाश्राद्धम्, गोदानं, केशान्तं कर्म, आग्रयणं, नवान्नपारणं, प्रपा (जलशाला) कर्म, उपाकर्म, वेदव्रतं, नील (काम्य) वृषोत्सर्गः, अतिक्रान्तजातकर्मादिसंस्काराः, देवस्थापनं, दीक्षाग्रहणम्, उपनयनं, मुण्डनं, प्रथमत्वेन तीर्थदेवदर्शनं, सन्यांसधारणम्, अग्निहोत्रं, राज्ञः प्रथमदर्शनं, राज्याभिषेकः, अपूर्वयात्रा, चातुर्मास्यव्रतं, समावर्तनं, कर्णवेधः, दिव्यपरीक्षणञ्च न कार्यमिति ।

अथ गुरुर्यदि सिंहराशौ मकरराशौ वा भवेत्तदापि उक्तानि कार्याणि न विधेयानीति सामान्यो नियमः । यथा रामाचार्यः -

**अस्ते वर्ज्यं सिंहनक्रस्थजीवे वर्ज्यं केचिद् वक्रगे चातिचारे।**

परन्त्वत्र सिंहस्थगुरोः प्रकारत्रयेण परिहारोऽपि प्रतिपादितः श्रीरामचार्येण -

**सिंहे गुरौ सिंहलवे विवाहो नेष्टोऽथ गोदोत्तरतश्च यावत् ।**
**भागीरथीयाम्यतटे हि दोषो नान्यत्रादेशे तपनेऽपि मेषे ॥**

अर्थात् सिंहराशिस्थो गुरुर्यदि सिंहस्यैव नवांशे भवेत्तदा कस्मिँश्चिदपि देशे विवाहादिकं न कार्यम् । यथा राजमार्तण्डे -

**सिंहे राशौ तु सिंहांशे यदा भवति वाक्पतिः ।**
**सर्वदेशेष्वयं त्याज्यो दम्पत्योर्निधानप्रन दुष्यति ॥**

तृतीयश्च परिहारोऽयं यत् - सूर्यो यदा मेषराशौ भवेत्तदा सिंहस्थो गुरुः कस्मिँश्चिदपि देशे न दोषकारकः । एवमुपर्युक्त-सिंहस्थगुरुविषये सारार्थरूपेण लिखति श्रीरामाचार्यः -

**मघादिपञ्चपादेषु गुरुः सर्वत्र निन्दितः।**
**गङ्गागोदान्तरं हित्वा शेषाघ्रिषु न दोषकृत् ॥**
**मेषेऽर्के सन व्रतोद्वाहो गङ्गागोदान्तरेऽपि च ।**
**सर्वः सिंहगुरुर्वर्ज्यः कलिङ्गे गौडगुर्जरे ॥**

एतेन स्पष्ट यत् कलिङ्गगौडगुर्जरप्रान्तेषु गङ्गागोदावर्यो-र्मध्यस्थदेशेषु च समस्तः सिंहराशिस्थो गुरुस्त्याज्यः । एतदतिरिक्तदेशेषु गुरुर्यदा चत्वारिंशत्कलाधिकषोडशभिरंशैरधिको भवति तदा दोषकारको न भवति । तथा कलिङ्गगौडगुर्जरान् विहायान्यदेशेषु सिंहस्थे गुरावपि शुभकार्याणि भवन्तीति ॥

अथ च मकरस्थे गुरुर्यस्त्याज्यः कथितस्तस्यापि परिहारः प्रतिपादित आचार्येण । यथा -

**रेवापूर्वे गण्डकीपश्चिमे शोणस्योदग्दक्षिणे नीच इज्यः।**
**वर्ज्यो नायं कौङ्कणे मागधे च गौडे सिन्धौ वर्जनीयः शुभेषु ॥**

अर्थाद् रेवा (ज्वालापुरमण्डले नर्मदानाम्ना प्रसिद्धा) नद्याः पूर्वभागे, गण्डक्याश्च पश्चिमे, तथा शोणनद्या उत्तरस्यां दक्षिणस्यां च

दिशि, नीचस्थो गुरुर्नैव वर्जितः । नीचस्थो गुरुरयं कौङ्कणदेशे (भारतस्य दक्षिणभागे) मगधदेशे (पाटलिपुत्र-गया-शाहाबादादिप्रदेशेषु) गौडदेशे सिन्धुदेशे च दोषकारको भवति । अर्थान्नोचस्थे गुरौ शुभकर्म त्याज्यमिति।

अथोपनयनादिशुभकार्येषु जन्मराशिवशादपि गुरुबलमपेक्षितं भवति। तत्र रामाचार्येण लिखितं यज्जन्मकालिकचन्द्राक्रान्तराशितो गोचरीयो गुरुर्यदि नवमपञ्चमैकादशद्वितीय-सप्तमान्यतमस्थाने भवेत्तदा शुभकारकः, यदि दशमषष्ठतृतीयैकादशगः स्यात्तदा शान्त्या शुभो भवति, चेच्चतुर्था-ष्टमद्वादशगो भवेत्तदाऽशुभकारको भवति । यथा –

**वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः ।**
**श्रेष्ठो गुरुः षट् त्र्याद्ये पूजयाऽन्यत्र निन्दितः ॥**

परन्तु केषाचिन्मते द्वितीयपञ्चमसप्तमनवमैकादशस्थानगतो गुरुः शुभः, चतुर्थदशमद्वादशस्थानगतः शान्त्या शुभः, प्रथमतृतीयषष्ठाष्टमस्थान-गतश्च निषिद्धो भवति । अत्र गुरुदौष्ट्यापवादं प्रतिपादयँल्लिखति रामाचार्यः –

**स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः ।**
**रिष्फाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसन् ॥**

अर्थाद् गुरुर्यदि स्वोच्चराशौ स्वभवने स्वमित्रभवने स्वनवांशे वर्गोत्तमनवांशे वा भवेत्तदा अशुभस्थानस्थः सन्नपि शुभकारको भवति । किञ्च स्वनीचस्थः शत्रुभवनस्थो वा गुरुरुपर्युक्तशुभराशिस्थः सन्नपि अशुभफलदो भवति ।

अथ च शुक्रो हि द्विरागमनयात्रादिषु विशेषेण विचारणीयो भवति । तत्र शुक्रो गन्तव्यदिगभिमुखेऽथवा दक्षिणभागे भवेत्तदा गन्ता न गच्छेत् । यदि गच्छेत्दा बालो म्रियते, गर्भिणी गर्भस्रावतवती भवति, तथा नूतनपरिणोता वन्धया स्यात् ।

अतः शुक्रः पृष्ठे वामे वा भवेदिति । यथोक्तमपि रामाचार्येण–

**दैत्येज्यो ह्यभिमुखदक्षिणे यदि स्याद्**
**गच्छेयुर्नहि शिशुगर्भिणीनवोढाः**
**चेद् वन्ध्या भवति च गर्भिणी त्वगर्भा ॥**

अत्र अस्तङ्गते शुक्रे द्विरागमादीनां निषेधः कृतः । अर्थादुदिते शुक्र एव द्विरागमादिकार्याणि विधेयानि । यथा बादरायणः –

**अस्तं गते भृगोः पुत्रे तथा सम्मुखमागते ।**
**नष्टे जीवे निरंशो वा नैव सञ्चालयेद् वधूम् ॥**
**गर्भिण्या बालकेनापि नववध्वा द्विरागमे ।**
**पदमेकं न गन्तव्यं शुक्रे सम्मुखदक्षिणे ॥**

अत्र नवोढाशब्देन द्विरागमने गन्त्री इत्यभिप्रेतमस्ति, न तु वधूप्रवेशकत्री इति । यतो वधूप्रवेशे शुक्रविचारो नापेक्षितः । यथा –

**नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः।**
**नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषदृन्नहि ॥**

अथ केषाञ्चिन्मते सम्मुखशुक्रो युवतीनां स्त्रीणां कृते न दोषकारकः । अर्थाद् या खलु द्विरागमने गन्त्री सा चेत्कुचरजोधर्मवती स्यात् तदा तस्याः कृते न दोषकारकः सम्मुखशुक्रोऽपि। यथोक्तमपि चण्डेश्वरेण –

**पित्र्यागारे कुचकुसुमयोः सम्भवो वा यदि स्यात्।**
**पत्युः शुद्धिर्न भवति रवेः सम्मुखो वाऽथ शुक्रः ॥**
**तूले लग्ने गुणवति तिथौ चन्द्रताराविशुद्धौ।**
**स्त्रीणां यात्र भवति सफला सेवितुं स्वामिसद्म ॥**

वादरायणेनोक्तं यद् भृग्वगिरोवत्सवशिष्ठकश्यपात्रिवंशोत्पन्नानां तथा भरद्वाज–वंशोत्पन्नानां कृते प्रतिशुक्रसम्भवो दोषो न बाधकः यथा –

**कश्यपेषु वशिष्ठेषु चात्रि भृग्वगिरःसु च ।**
**भरद्वाजेषु वात्स्येषु प्रतिशुक्रो न दुष्यति ॥**

अत एव श्रीरामाचार्योऽपि पूर्वोक्तं परिहारद्वयमपि श्लोकेनैकेन प्रतिपादयति मूहूर्त्तचिन्तामणौ द्विरागमनप्रकरणे –

**पित्र्ये गृहे चेत्कुचपुष्पसम्भवः स्त्रीणां न दोषः प्रतिशुक्रसम्भवः ।**
**भृङ्ग्वगिरो वत्सवशिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा ॥**

अत्र विचारणीयोऽयं विषयो यद् द्विरागमे शुक्र उदितो भवेत् परन्तु सम्मुखस्थो दक्षिणस्थो वा न भूयादित्यत्र किं कारणम् ? अत्र कारणमिदं यच्छुक्रग्रहः (कन्दर्पस्या) धिष्ठाता विद्यते । अतः शुक्रो यदि

स्त्रियः सम्मुखे दक्षिणे वा भागे भवति तदा तां स्त्रीं शुक्रेण व्यथितां करोति । चेत् स्त्री स्वयं कुचपुष्पवती भवति तदा तु तस्यां शुक्रस्य साम्राज्यं निसर्गतो भवत्येव, अतस्तस्यामवस्थायां तस्यै शुक्रग्रहाच्छु-क्रविकारस्याशङ्का न कल्प्यते । अत एवाचार्यैः यौवनत्वङ्गतायाः स्त्रियो द्विरागमे सम्मुखशुक्रेणापि दोषाभावः प्रतिपादितः । अद्यत्वे प्रायो दृश्यते यत् स्त्रियः कुमार्यवस्थायामेव यौवनलक्षणलक्षिता भवन्ति । तदनन्तरं हि तासां विवाहो जायते । एवं परिस्थितौ तासां द्विरागमने उक्तवचनानुसारं प्रतिशुक्रविचारो नापेक्षितः । परन्तु प्रायो लोकव्यवहाराच्छास्त्रमर्यादाया-श्चांशिकरक्षार्थं युवत्या अपि स्त्रियो द्विरागमे शुक्रस्य विचारः क्रियत एव। अथ सम्मुखशुक्रस्य परिहारः शुक्रान्धविहितनक्षत्रैरपि दृश्यते शास्त्रेऽत्र । तत्र रेवतीनक्षत्रदारभ्य मृगशिरानक्षत्रं यावच्छुक्रोऽन्धो भवति । तेषु शुक्रान्धनक्षत्रेषु सम्मुखो दक्षिणो वा शक्रो दोषकरो न जायते । तद्यथा

**रेवत्यादिमृगान्त्येषु यावत्तिष्ठति चन्द्रमाः ।**
**तावच्छुक्रो भवेदन्धः सम्मुखस्थो न दोषकृत् ॥**

एवमेव ज्यौतिषशास्त्रे गुरुशुक्रयोरनयोर्बाहुल्येन प्राधान्येन च दृश्यते विचारो, यः खलु निखिलोऽपि नैव प्रतिपादयितुं शक्यतेऽ-स्मिँल्लघुशोधपत्रे । किन्त्विदं तु स्पष्टमेव यद् गुरुभार्गवाविमावस्माकं जीवनेऽत्यन्तमुपयोगिनाविति । अता नात्र सन्देहो यत् 'प्रशस्ते ज्यौतिषे शास्त्रे प्रशस्तौ गुरुभार्गवौ' इति ।

**सन्दर्भसूची**

1. ज्यौतिर्विज्ञानम्, अर्कयोमयाजी धूलिपालः, डाइरेक्टर, रिसर्चइन्स्टीयूट वाराणसेय संस्कृत वि. वि. वाराणसी, 1994 ई.
2. प्रबन्धमणिमाला, पं. गङ्गाधरमिश्रः, सम्पूर्णानन्द सं. वि. वि. वाराणसी ।
3. बृहद्दैवज्ञरञ्जनम्, डॉ. मुरलीधरचतुर्वेदी, मोतीलालबनारसीदासः, दिल्ली 1984 ई.।
4. मुहूर्त्तचिन्तामणिः, श्रीकपिलेश्वरशास्त्री, चौखम्बा अमर भारती प्रकाशन, वाराणसी 1982 ई.
5. मुहर्त्तचिन्तामणिः, पं. केदारदत्तजोशी, मोतीलालबनारसीदास चौक वाराणसी, 1979 ई. ।

6. लघुपाराशरी, श्री अनूप मिश्रः गङ्गाविष्णुश्रीकृष्णदासस्टीमप्रेस – कल्याण, मुम्बई, 1990 ई. ।
7. वास्तवचन्द्रशृङ्गोन्नतिसाधनम्, श्रीगङ्गाधरमिश्रः मास्टरखेलाडीलाल एण्ड सन्स सं.बु.डी.क.ग. वाराणसी – सीटी, 1943 ई.
8. सिद्धान्ततत्त्वविवेकः, श्रीकमलाकरभट्टः, सम्पूर्णानन्द सं. वि .वि. वाराणसी ।
9. सिद्धान्तशिरोमणिः, भास्कराचार्यः, चौखम्बासंस्कृतसीरीज आफिस, वाराणसी
10. सूर्यसिद्धान्तः, कपिलेश्वरशास्त्री, चौखम्बासंस्कृतसीरीज आफिस, वाराणसी ।
11. होराशास्त्रम्, वराहमिहिरः, श्रीरुद्रः, शूरनादकुंजनपिल्ल, पौरस्त्यग्रन्थप्रकाशन 1957 ई. ।

**आचार्यः, ( ज्योतिषविभागः )**
**राष्ट्रियसंस्कृतसंस्थानम्,**
**भोपालपरिसरः**



# राजयोगानामपवादः

✍प्रो. ईश्वरभट्टः

सुविदितमेवैतत् समेषां विदुषां निखिलेऽस्मिन् भुवनवलयेऽप्यनन्ते अचिन्त्या अनिर्वाच्या च काचन शक्तिः भूतानि सर्वाणि यन्त्रारुढानिव भ्रामयतीति । न तत्र शस्त्रं सङ्गच्छते । न युक्तिः युनक्ति । न साधनसम्पत्तिः साहनोति । नापि कौशलमनुकूलपति । विचारविशारदाः विवेकिनः तामेव शक्तिं 'काल' इत्यभिदधते । स एव कालः सर्वापेक्षया बलवत्तरः । पङ्गु लङ्घयते, मूकं वाचालयति, जडं जल्पाकयति । तस्यैव भाग्यं दिष्टम् इत्यादिनामान्तरम् । सूत्रे मणिगणा इव तस्मिन्नेव कालतन्तौ सर्वः जीववर्गः संग्रथितो वर्तते । तस्य प्रसादे परं सर्वमस्मत्साधनं साधीयो भवति । तस्य तु वैमुख्ये नस्समेषां विद्या विफलतां भजते । प्रयत्नः निष्फलतामायते । चातुर्यं शैथिल्यमाप्नोति । अहो दैवगतिर्विचित्रा बलीयसी केवलमीश्वरेच्छा इति लोके व्यवहारः । ईश्वरेच्छामपि कालशब्देन केचिद् व्यवहरन् । कालस्तु ईश्वरवदनादिः । ऋतुः सुदर्शनः काल इति सहस्रनामपद्ये विष्णौ, कालो हि भगवान् देवः स साक्षात् परमेश्वरः इति चान्यत्र परमेश्वरे च कालशब्दः प्रयुक्तः परिदृश्यते । कलयति अयु इति दिवसगणनाविशेषे, कालयति प्रेरयति सर्वाणि भूतानि इति दिष्टापरनामधेये पुरुषभाग्यविशेषे च विपश्चितः तस्य व्युत्पत्तिं कुर्वन्ति । कोषादिषु कालशब्दस्य यमः, दिष्टं कृष्णवर्णः कालपरिमाणविशेषः शनैश्चरः, पर्वतविशेषः, कोकिलः इत्यदयो अर्थाः कथ्यन्ते । कालो हि बलवत्तरः इत्यस्मिन् वाक्ये कालशब्दः दृषार्थकः । समयविशेषो वा । स च कालः ज्योतिश्शास्त्रादवगम्यः । इत्थं कालनिर्णायकशास्त्रमिदं सिद्धान्त-संहिता-होरेति स्कन्धत्रये विभक्तमस्ति । स्कन्धत्रयात्मकस्य ज्योतिश्शस्त्रस्यापि पुनः प्रमाणफलभेदेन द्विविधम् । तदुक्तं यथा-

**''प्रमाणफलभेदेन द्विविधं च भवेदिदम् ।**[१]
**प्रमाणं गणितस्कन्धः स्कन्धावन्यौ फलात्मकौ ॥'' इति ।**

एवं प्रमाणफलभेदेन विभक्ते द्विविधे ज्योतिः शास्त्रे संहिताहोरारुपात्मकफलभागं प्रति बहूनामविश्वासो जात इति नेदं शक्यते निह्वोतुम् । अत्र तु कारणं भगस्यास्य गहनतैव । यतोऽत्र भूयांसः समुपलभ्यन्ते उत्सर्गा अपवादाश्च । अत्रोत्सर्गोऽपवादोऽयमिति सुसूक्ष्मं पर्यालोच्य विविच्य फलनिर्देशो न तावत्सुसाधः । तावद्धिषणशालिनो यथाकालं सम्पादितशास्त्रपरिचयाः गुरुमुखावगतवस्तुतत्त्वविदः सिद्धमन्त्राः लक्षणसम्पन्नाः दैवज्ञाः एव प्रभवन्तीत्यत्र न कापि विप्रतिपत्तिः । तस्मात् गहनभूतस्य फलभागे राजयोगानामपवादः इति विषयमवलम्ब्य सम्प्रति दिङ्मात्रं प्रस्तूयते ।

अत्र सामान्यतः सर्वादौ जिज्ञासा समुदेति राजयोगस्य स्वरुपं किमिति? जातके राजयोगः विद्यमाने सति तदानीमेव तस्य अपवादः यद्वागङ्गः चिन्तयितुं शक्यते । यदि कस्यचिद् जातकस्य राजयोग एव न स्यात्तर्हि तस्य राजयोगभङ्गस्य विचारो न सम्भवति । तस्मात् राजयोगो नाम किमिति आदौ संवर्ण्य तत्परमेव तेषां योगानां भङ्गस्य विषयो निरुप्यते । तत्र त्रिकोणपत्योः सम्बन्धवशात् जायमानः राजयोगः केन्द्रकोणपत्यो अन्योन्यभवने स्थितयोः उत दृयोरेकराशै व्यवस्थितयोः यद्वा पूर्वोक्तयोः परस्परदृष्टिवशाच्च सञ्जायमानः राजयोगः सर्वोत्कृष्टः राजयोगो भवति । नवमात् नवमं पञ्चमं भवतीत्यतो त्रिकोणपत्योः सम्बन्धेन विशिष्टं राजयोगमश्यधायि पराशरः ।

उक्तञ्च–

**''केन्द्रत्रिकोणाधिपतयोरेकत्वे योगकारिता ।**[२]
**अन्यत्रिकोणपतिना सम्बन्धो यदि किं परम् ॥''**

पुनः तत्रैव केन्द्रत्रिकोणपत्यो अन्योन्यभवने संस्थितेर्वशात् किं वा द्वयोरेकराशौ संस्थितेर्वशात् तयोः परस्परं दृष्टेर्वशाच्च विश्रुतः नृपालयोगः भवतीति प्रत्यपादि पराशरः ।

तदुक्तं यथा–

**''केन्द्रत्रिकोणाधिपत्योश्चेदन्योन्यभवने स्थितिः ।**[३]
**किं वा द्वयोरेकराशै स्थितिर्येको अन्यगेहगः ॥**

उपर्यक्तपद्यस्य आमूलचूडं निरीक्षणपरीक्षणेन नितरां नवमेशदशमेशयोः सम्बन्धवशात् राजयोगो सम्पत्स्यतेति सिध्यति । अत्र भाग्यं तावत् नवमभावतः कर्म तावत् दशमभावतः विमर्श्यते। ननु सर्वप्रायम्येन इयन्तावत् शङ्का समुदेति यत् पूर्वोक्तराजयोगस्य परिशीलनार्थं किं पूर्वपूर्वं बलीयेति न्यायानुसारेण नवमदशमभावयोर्मध्ये पूर्वप्रधानो आधारभावः नवमः आधेयः नवमाधिपतिश्च प्रमुखं स्थानं प्रसङ्गेऽस्मिन् तौ सुतरां भजतः आहोस्वित् उत्तरोत्तरं बलीयेति कल्प्यमाणो आधारः दशमभावः आधेयो दशमाधिपातश्च महत्पदमासादयतेति । वस्तुतः पर्यालोच्यमाणे क्रियोपस्थितौ पूर्वं पूर्वं बलीयेति कल्पयामः तर्हि 'बली पुरुषाकारो दैवमत्यनुवर्तते' इत्यस्य वाक्यस्य वैय्यश्यापत्तिः । यतो हि भाग्यभाववाचिनो शब्दाः शिवम्, शुभम्, भागधेयम् श्वः श्रेयसम् देवतालयपदम् तपस्या सुकृतम् नियतिः पदविः पुण्यञ्चेति प्रायः त्रिसप्ततिसंख्याकशब्दैः अभिधीयमाणोऽयं भावः पूर्वोक्तनामतः विहितानां विषयाणां चिन्तने विमर्शने पर्यालोचने च साधको वर्तत्ते । 'उत्तरोत्तरं बलीयेति निरुपयामः' तर्हि 'सर्वमपहाय चिन्त्यं भाग्यर्क्षं प्राणिनां विशेषेण' इत्यस्य वाक्यस्यापि वैय्यर्श्यप्रसङ्गः । तस्मात् सिद्धान्ततः सर्वसाधारण्येन स्वस्वस्वामिभाव- सम्बन्धरुपं द्विनिष्टत्वं पूर्वोक्तनवमदशमेशयोः राजयोगविषयकत्वेन अभ्युपगन्तव्यं भवति । तत्रपि पूर्वविहितराजयोगस्य चिन्तनक्रमे कर्मणः निर्वाहार्थं उत सम्पादनार्थं नैके विषयाः परिशीलनीयाः सन्ति । उदाहरणार्थं यथा धर्मेशकर्मेशयोः मिथः सम्बन्धः युक्तिभिः परिशील्यते तथैव कर्माधिपसुखाधिपत्योरपि सुसम्बन्धः विमर्शनीयः । पुनर्जिज्ञासा उदेति इतरभावेभ्यः दशमभावस्यैव को विशेषः?

सर्वा अपि भावाः जातकफलचिन्तनाय खिल? नैवम् । दशमर्क्षस्याऽऽज्ञात्वेन इदं केन्द्रस्थानं विष्णुस्थानं भवति । केन्द्र इति शब्द एव विष्णुपरकः । शुभाशब्देन लक्ष्मीस्थानं नवमं गृह्यते । पुरुषरुपविष्णोः मूलप्रकृतिरुपलक्ष्म्या संयोग एव केन्द्रत्रिकोणयोः सम्बन्धकरः राजयोगः । अत एव पराशरोऽपि ब्रूते-

**''लक्ष्मीस्थानं त्रिकोणं तु विष्णुस्थानं च केन्द्रकम् ।''**

तस्मात् राजकारकस्थानमस्ति सुतरां दशमः । अतः लोके त्रिकोणेशाभ्यां केन्द्रपतिभ्यां च सम्बन्धवशादेव प्रभुत्वं चिन्त्यमिति सर्वैरप्यवगन्तुं शक्यम् । अनुभवेनापि केचन राजयोगसदृशं फलं द्वितीयचतुर्थाधिपत्योः प्राबल्येन अवशिष्टानां स्थानानाम् अधिपतीनां दौर्बल्येनाऽपि वक्तुं शक्नुमः । तथाऽपि सर्वकारस्य अनुकूलता, जनानुकूलता, मानं, सम्मानं, उच्चाधिकारिणां कृपा, प्रोन्नतिः, राज्यपदम्, गुणप्रवृत्तिः चित्तसमुन्नतिः आज्ञा, क्रिया, कृत्यम्, यशः, जीवनम् वाणिज्यम्, शासनं, प्रतिष्ठा, निर्देशः, पुष्करम्, अवसादः, उडुपथः तारापथप्रभृति अष्टाशीतिपर्यायपदैः प्रयुज्यमानो अयं भावः जातस्य जनस्य जीवने महत्पदमासादयतीति न कोऽपि संशयलेशः ।

'चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिरि'त्युद्घोषयतो महाकवेर्भामहस्य वचनानुरोधेन प्रकृतेः परिवर्तनशीलऽस्मिन् जगति कार्तान्तिकप्रवरैऽभिप्रेताः सन्ति आधेयाः भास्कराद्याः ग्रहेन्द्राः । सन्ति आधाराः निकेतनस्थलभावाश्च । यद्याधाराः शोभनैः ग्रहैरवलोकिताः संयुताश्च भवन्ति तदा तद् भावं पुष्यन्ति । अन्यथा भावस्य हानिकराः भवन्तीत्यत्र भवतां समक्षं समुपस्थात्य सोऽयं लेखनी पुरतः प्रवर्त्यते ।तदुक्तं यथा–

**''आधेयाः स्युर्भास्कराद्या ग्रहेन्द्राः**[५]
**आधाराः भस्थानभावः निरुक्ताः ।**
**यद्याधाराः सौम्ययुक्तेक्षिता ये**
**तेषां पुष्टिहानिरुक्ताऽन्यथा न तु ॥ इति ।''**

सन्दर्भेऽस्मिन् राजयोगस्य विषये तत्र तत्र विभिन्नव्याख्यानेषु उद्धृतप्रमाणैरवगम्यते यत् कस्यचिद् जनविशेषस्य पुरुषप्रयत्नस्य पुष्कले सत्यपि कृतस्य कर्मणः फलं न लप्स्यते । तदा भाग्ये तस्य तत्फलावाप्तिर्नास्तीति आशयः । सकृत्कर्मणः सकाशादेव फलं प्राप्नोति तर्हि जातकस्य भाग्यं प्रबलमस्तीति वेदितव्यः । तत्रापि प्रबलत्रिकोणभूत–नवमेशकेन्द्रेशयोः सम्बन्ध एव पूर्णराजयोगेति फलितार्थः । पूर्वाचार्याः कण्टकत्वात् सप्तमं केन्द्रत्रिकोणत्वात् लग्नं च वर्जयित्वा चतुर्थदशम–

योरन्यतरस्य पञ्चमनवमेशयोरन्यतरेण सम्बन्धः राजयोगति सिद्धान्त-मकुर्वन् । तथा चोक्तं जातकचन्द्रिकायाम्-

**''केन्द्रत्रिकोणपतयः सम्बन्धेन परस्परम् ।**[६]
**इतरैरप्रसक्ताश्चेद्विशेषफलदायकाः ॥**
**केन्द्रत्रिकोणनेतारौ दोषयुक्तावपि स्वयम् ।**
**सम्बन्धमात्राप्रबलौ भवेतां योगकारकौ ॥'' इति ।**

तत्रापि

**''क्षेत्रे स्थितिर्मिथो योगः दृष्टिः केन्द्रेषु संस्थितिः ।**[७]
**त्रिकोणे वा स्थितिः पञ्चप्रकाशे बन्ध इरितः ॥''**

इत्युक्तप्रकारेण बन्धः सम्बन्धो वा पञ्चधा भवति । तत्र मिथः क्षेत्रास्थितिर्गरिष्टा । इतरकेन्द्रकोणस्थाने युतिरपि भाग्यदैव । एवमेवतर-भावेश्वपि युतिरपि किञ्चित्फलदायिनी भवति । परन्तु दुःस्थाने युतिरधमा वाच्या । तत्रापि 'केन्द्रत्रिकोणेशौ क्रूरस्थानपती भवतः तर्हि तयोः सम्बन्ध मात्रेण न योगं लभते नरः' इति बृहत्पाराशरे पराशरेण भवितम् । तदुक्तं यथा-

**''धर्मकर्माधिनेतारौ रन्ध्रलागाधिपौ यदि ।**[८]
**तयोः सम्बन्धमात्रेण न योगं लभते नरः ॥'' इति ।**

तस्मात् पूर्वोक्तवचनेन केवलं केन्द्रत्रिकोणपत्योः अनिषृस्थानाधिपत्योः परस्परसम्बन्धमात्रेण राजयोगस्य भङ्गोऽपि जायतेति सिध्यति । एवं राजयोगानां विषये दिङ्मात्रं संवर्ण्य साम्प्रतं राजयोगा-नामपवादयोगाः यद्वा राजयोगभङ्गकर्तृकयोगाः समुदीर्यन्ते । जातकभङ्ग-हेतुत्वेन यद्वा राजयोगभङ्गकर्तृकत्वेन प्रतिपादितेषु प्रथमगणनीयेषु योगेषु राजयोगस्य भङ्गाकेचिद्रेकायोगाः, केचित्प्रेष्याः केचित्केमुद्रुमाख्येति तेषां चत्वारो प्रभेदाः समुपवर्णिताः सन्ति । एषाम् अत्र निरुपितानां चतुर्णां योगानां मध्ये कश्चिदेकोऽपि योगः यस्य जन्मकाले जातके भवति तस्य जीवनं व्यर्थमेव । तद्यथा

**केचिद् योगा राजयोगस्य भङ्गाः कचिद्रेका नाम दारिद्रययोगाः ।**[९]
**केचित्प्रेष्याः केच केमद्रुमाख्यास्ते चत्वारो राजभङ्गकराः स्युः ॥**

इति

ननु कस्मिन्योगे जातो दु:खभाग्भवतीति चेत् उच्यते । राजभङ्ग योगे जातो राजाऽपि दु:खभारभवति । सामान्यत: राजकुले य: प्रथम: पुत्र: स एव राजा भवति । परन्तु यस्य जन्मकाले सूर्यो मेषे (स्वाच्चस्थे) व्यवस्थितेऽपि तुलनवांशे विद्यमाने सति तच्च पापग्रहेण ईक्षिते च असौ जातो निर्धनो भवति । एवं कन्याराशिगते कन्यांशके च व्यवस्थिते अर्थाद् कन्याया: नवमे नवमांशे विद्यमाने सति जातो भिक्षुको भवति । अथ च सूर्ये नीचर्क्षे अतिनीचभागसहिते सति स: विगतश्रीपुत्रदाराशनो भवति । अर्थाद् सुतरां तस्य दौर्भाग्यमेव सम्भवति ।तदुक्तं यथा–

**“मेषे जूकनवांशके दिनकरे पापेक्षिते निर्धनः[१०]**
**कन्याराशिगते यदा भुगुसुते कन्यांशके भिक्षुकः ।**
**नीचर्क्षे त्वतिनीचभागसहिते जातो दिवानायके**
**राजश्रेषृ कुलाग्रजोऽपि विगतश्रीपत्रदाराशनः ॥”**

दुण्डिराजोऽपि अभ्यदायि–

**“शत्रुक्षेत्रगतैः सर्वैवर्गोत्तमयुतैरपि ।[११]**
**श्राजयोगाः विनश्यन्ति बहुभिर्नीचगैग्रहैः ॥” इति ।**

किञ्च चन्द्रलग्नं देह: जन्मलग्नं च प्राणसंज्ञकेति मन्यमानो दुण्डिराज: पूर्वोक्तलग्नद्वयं नैकोऽपि ग्रह: नावलोकयति तदानीमपि राजयोगस्य भङ्गं ब्रूते । तद्यथा–

**“चन्द्रं वा यदि वा लग्नं ग्रहो नैकोऽपि वीक्ष्यते ।[१२]**
**तथाऽपि राजयोगानां भङ्गमाह पराशरः ॥” इति ।**

पूर्वोक्तं दुण्डिराजवचनं गुडजिह्विकान्यायेन सूत्ररुपेण सुलभमवगाढुं वर्णयामास तत्र भवान् महादेव: । तद्यथा –

**उच्चेऽर्के नीचांशे राजपुत्रोऽपि नीचतां गच्छति ॥[१३]**
**इतिपरमनीचगेऽर्के व्यर्था राजयोगाः ॥**

पुन उक्तञ्च–

**‘तुलायां नलिनीनाथः परमनीचमाश्रितः ।[१४]**
**निर्दिष्टराजयोगानां दलनोऽथ भवेद्ध्रुवम् ॥”**

पुन: राजयोगस्य भङ्गं व्याचक्षाणो आचार्य: यदि सर्वेऽपि पापग्रहा: केन्द्रभावे नीचराशिगा: स्यु: न शुभैरवलोकिता: भवेयु: किञ्च

स्वनीचराशौ शत्रुराशौ वा द्वादशभावे यदि विलसन्ति तर्हि राजयोगाः विलयं प्रयान्ति । उक्तञ्च श्रीमता दुण्डिराजेन–

**''सर्वेपि पापा यदि कण्टकेषु नीचारिगा नो युगदृष्टियुक्ताः । नीचारिरिःफेषु च सौम्यसंज्ञा राज्ञां हि योगो विलयं प्रयांति ॥''**

**इति**पुनश्च सर्वार्थचिन्तागणौ निगदति–

**तुलायां दशमे भागे स्थितः पंकजबोधनः ।**[१५]

**सहस्रराजयोगानां फलं नीचत्वमाप्नुयात् ॥ इति ।**

अथ राजयोगभङ्गकर्तृकमवश्यमनुसन्धेययोगेषु द्वितीयस्थानं भजते रेकायोगः । योगस्यास्य लक्षणं ब्रबता आचार्यो वक्ति यत् लग्नस्वामिनि बलवर्जिते अष्टमभावेशेन वीक्षिते बृहस्पति अस्तंगते सति रेकाख्ययोगः सञ्जायतेति । पुनः बन्धुस्थानाधिपः तुर्यभावेशेन संयुतः तत्काले चतुर्थेशः यस्मिन् नवांशे स्यात्तदीशे भौढ्यंगते, तथाभूते स द्वादशाधिपतिना अवलोकिते सति यदा जन्म भवति यस्य तस्य रेकाह्वयो योगो भवतीति विभावनीयः ।

तदुक्तं यथा–

**''लग्नेशे बलवर्जिते परिभवस्थानाधिपेनेक्षिते**[१६]

**सूर्योच्छिन्नकरे पुरन्दरगुरौ रेकाख्ययोगो भवेत् ।**

**''षष्टस्वामिनिरीक्षिते सुखपतो रन्ध्रेशयुक्ते तथा**[१७]

**मानेशे सुतगे विलग्नरमणे नीचं गते रेकभाक् ।**

उक्तञ्च कालिदासेनाऽपि–

**''नीचस्थाश्च पराजितास्त्वरिगताः पापक्षिताक्रान्तयुङ्**[१८]

**मध्यस्थानगताश्च वक्रविकलस्वर्भानुसंसर्गगाः ।**

तथा चोक्तम्–

**''निर्विद्यो विघनोदरिद्रसहितो रेखोद्भवः कामुकः**[१९]

कस्मिन् समये अयं रेकायोगो फलदेति विमर्शे आह वैद्यनाथः–

**''एकद्विकत्रिकखलद्युचरा नराणां कलपस्वविक्रमगताः परतस्तथैव ।**[२०]

उपक्रमेऽस्मिन् पूर्वाक्तराजयोगभङ्गहेतुत्वेन प्रथितेषु दुर्योगेषु तृतीयः प्रेष्ययोगः महत्पदमासादयतीत्यत्र नातिशयोक्तिः । येषु योगेषु जातो नरः प्रेष्यत्वं प्राप्नोति उतविन्दति ते प्रेष्ययोगाः भवन्ति । तद्यथा–सूर्ये

दशमे भावे चन्द्रे सप्तमभावगते, शनौ चतुर्थे कुजे ततीयभावमुपगते, चरराशिगं लग्नं, बृहस्पतौ धनभावस्थे निशायां यस्य जन्म तादृशो नरः परकार्यकृत् भवति नाम भृत्यः अथवा सेवको भवति ।तदुक्तं यथा–**''माने रवौ मन्मथगे निशीशे गेहे शनौ सोदरगे धराजे ।**[२१]

तथाचोक्तं सर्वार्थचिन्तामणौ–

**''नीचे भृगौ मन्दनवाशके वा व्ययस्थिते चन्द्रखी कलत्रे ।**[२२]
**निरीक्षितौ भानुसुतेन चात्र जातः परप्रेब्यमुपैति नित्यम् ॥'' इति**

कुजगुरुरवयः षष्टचतुर्थदशमभावानां सन्धौ प्राप्ताः स्युः, तत्रापि विशिष्य भौमः षष्टभावसन्धौ, गुरुः चतुर्थभावसन्धौ, आदित्यः दशमभावसन्धौ च स्थितो भवेत् । चन्द्रः शुभराशौ पापनवांशे गतवति, गुरुः विलग्नपेन सहिते यत्र तत्र गते जातः प्रेष्यः स्यात् । तदाह वैद्यनाथः–

**''प्रेष्यो भवेदरिसुखास्पदसन्धियाता भूपुत्रदेवगुरुवासरनायकाश्चेत् ।**[२३]
**पापांशके शशिनि शोभनराशियुक्ते जीवे विलग्नपयुतेपरकार्यकृत्सात् ॥''**
इति ।

दुर्योगत्वेन विहितस्य प्रेष्ययोगस्य फलं इत्थं प्रणिगदितं वर्तते । तद्यथा अस्मिन् योगे जातः नरः पापात्मा, कलहप्रियः कठिनवाग् बाह्मणनिन्दकः, विद्याभाग्यहीनः दुष्टः रसिकः मिथ्यावादी कारुणिकः अस्थिरमतिः, मानभङ्गिचतुरश्च भवति । तदुक्तं यथा–

**''पापात्माकलहप्रियः कठिनवाग् भूदेवतादूषको**[२४]
**विद्याभाग्यविहीनदुष्टरसिको मात्सर्यकोपान्वितः ।**

उक्तञ्च

**''रविं विनेन्दुतः कश्चिद् ग्रहो नैवार्थरिष्फगः ।**[२५]
**कमद्रुमागिधो योगः केन्द्रे ग्रहयुते न सः ॥'' इति ।**

वराहोऽपि बृहज्जातके सुनफादियोगचतुष्टयस्य प्रतिपादनावसरे नृपालयोगभङ्गकर्तृक– केमद्रुमयोगस्य निरुपणं तदन्यमतपुरस्सरं समुपवर्णयति । तद्यथा–

**''हित्वाऽर्कं सुनफाऽनफादुरुधुरा स्वान्त्योभस्थैर्ग्रहैः ।**[२६]
**शितांशो कथितोऽन्यथा तु बलिभिः केमद्रुमोऽन्यैस्त्वसौ ॥**

योगकर्तृकग्रहानुरुपं फलञ्च वक्तव्यमित्युक्तन्यायेन राजयोग-सद्भावेऽपि केमद्रुमादि दुर्योगवशाद् तेवच राजयोगाः निष्फलाः भवन्तीति निरुप्यमाणो आचार्यः ब्रूते यत् यस्य कस्यापि जन्मकाले राजयोग-श्चेतथाऽपि तस्मिन् कश्चित् केमद्रुमोऽपि भवेत्तदा ते च राजयोगाः केमद्रुमदोषान्नश्यन्त्येव । केमद्रुमवशाद् दरिद्र एव भवेन्न राजेति भावः । अत्रोपमा प्रदीयते 'हरिं दृष्ट्वा यथा द्विपेति' द्विपाः नाम हस्तिनः सिंहं दृष्ट्वा यथा भीतभीताः पलायन्ते तथैव केमद्रुमाख्यं दुर्योगं दृष्ट्वा राजयोगाः विनष्टाः भवन्तीति । तदुक्तं यथा–

**''योगे केमद्रुमे प्राप्ते यस्मिन् कस्मिश्च जातके ।**[२७]
**राजयोगाः विनश्यन्ति हरिं दृष्ट्वा यथा द्विपाः ॥'' इति ।**

केमद्रुमस्य अनिष्टफलं ब्रुवता आचार्यः विशिष्य जातके केमद्रुमयोगे विद्यमाने सति नृपतेर्वंशजातोऽपि मलिनः, दुःखितः, नीचः, निस्वः, प्रेष्यः खलश्च भवतीति प्रत्यपादि ।

उक्तं च श्रीमता वराहेण–

**''केमद्रुमे मलिनदुःखितनीचनिस्वः प्रेष्यः खलश्च नृपतेरपि वंशजातः ॥''**[२८] इति ।

राजयोगस्य अपवादकर्तृकभेदेनाऽपि फलभेदोऽपि तर्कजीयः । सारावल्यादिग्रन्थेषु उत्पातानां बाहुल्ये सति राजयोगभङ्गः विशेषतः दर्शितो वर्तते । तथा चोक्तं कल्याणवर्मणा

**''उल्कायाः पतने चैव निर्घातव्यातिपातयोः ।**[२९]
**केतोश्च दर्शने चैव यान्ति नाशं नृपोद्भवाः ॥**
**अन्यैः क्रूरोत्पातैस्त्रिशङ्कुताराद्युदयैश्च सद्यः ।**
**क्षिप्रं प्रयाति विलयं नृपयोगो भानुजो यदि विलग्ने ॥**

राजयोगानां सद्भावेऽपि उत्पातानां बाहुल्ये सति जायमानं फलं प्रदर्शयामास तत्र भवान् दुण्डिराजदैवज्ञः । तद्यथा–**उल्काव्यतीपातदिने तथैव नैर्घातिके केतुसमुद्भवे वा ।**[३०]

नवायखेशाः नीचगाः व्यर्था राजयागोः, पापाः नीचगास्सर्वे कण्टकगाः सौम्यास्त्रिकोणगाः व्यर्थाः राजयोगाः, परमनीचंऽकं व्यर्थाराजयोगाः[31] इत्यादिजातकतत्त्वोक्त – लघुसूत्राणाम् आधारेण किञ्च

तत्र तत्र विभिन्नव्याख्यानेषु उद्धृतप्रमाणैश्च अवगम्यते यत् भूपालयोगभङ्गकर्तृकयोगानां परिशीलनावसरे सर्वत्र सामान्यतः ग्रहाणां नीचगतत्वं विशेषतश्चिन्तनीयमिति । इयानत्रविशेषोऽभिप्रेतः।

राजयोगानाम् अपवादचिन्तनक्रमे ग्रहाणामुच्चत्रिकोणक्षेत्रांशगतत्वं वक्रगतत्वमुच्चक्षेत्रादिगशिगतत्वं विशेषतश्चिन्त्यम् । 'बलयोगाद् फलमं शर्क्षयोः' इति राश्यंशयोगाद् यदि साम्यत्वं स्यात्तदा बहुकालफलदस्य ग्रहेण फलञ्चिन्त्यम् । आयुर्दायाध्याये विहित 'ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम्' इत्याख्य वचनस्य परिशीलनेन क्षितिपालयोग-विनाशकर्तृकत्वेन अस्य भावः सत्याचार्यमतप्रशंसायां प्रवृत्तीमव भाति चेदपि ग्रहाणाम् अंशकप्राधान्यमेवात्र व्यक्तीभवति । एवमेव बृहज्जातकस्य राजयोगाध्यायस्य आद्यश्लोके राजयोगान् दर्शयितुमारभमाणः प्रथमं पापग्रहाणां स्वतुङ्गस्थितिफलविशेषचिन्तनक्रमे ''प्राहुर्यवनास्स्वतुङ्गगैः क्रूरैः इत्यत्र क्रूरग्रहाणामुच्चगतत्वेन क्रूराप्मानृपतिर्जायतेति ब्रुवन्ति । तत्रैव स्वतुङ्गणैः क्रूरैरित्यत्र स्वनीचगैः क्रूरैः इति वैपरीत्येन राजयोगभङ्गः वाच्यः । तेषां क्रूराणां केन्द्रगतत्वं सौम्यग्रहादृष्ट्युतत्वं च शुभानां व्ययरिपुरुध्रगतत्वञ्च योगोपकारितया उक्तम् ।''

'अथ वक्रार्कजार्कगुरुभिः सकलैस्तिभिश्च स्वोच्चेषु षोडशनृपाः कथितैकलग्ने' इत्यत्रापि वैपरीत्येन राजयोगभङ्गो तर्कणीयः । 'अपि खलकुलजाता मानवाः राज्यभाजः' इत्यादिश्लोकेन जातिदेशावस्थानरुपं फलभेदं वक्तव्यम् । अपि च तत्रैव दशा पाककालमुपदिष्टवत् ''शत्रु-नीचगृहयातदशायां छिद्रसंश्रयदशा परिकल्प्या'' इत्यनेनापि राजयोगभङ्गो ऊह्यः । तत्र छिद्रं नाम महारिभिः अन्विष्यमाणं अवस्थान्तरं परिकल्पनीयम् ।

तस्य संश्रयदशा नाम राज्यभ्रंशः । अथवा छिद्रदशा नाम अनर्थबहुलावस्था । विशिष्य तत्र छिद्रसंश्रयशब्देन भ्रंशप्राप्तिः, अनर्थः असहिष्णुता वलवदन्यराजसंश्रयश्च विवक्ष्यत इति । तत्र अत्यन्तं भ्रंशो नाम अनर्थबाहुल्यं वा अनर्थशमनाय अन्याश्रयो वा ग्रहाणां बलाबलवशेन निरुत्य वक्तव्यमित्यर्थः विशिष्य राजयोगभङ्ग कर्तृकत्वेन ।

तदुक्तमाचार्येण-

**‘‘बलयुक्तो दशमगतस्तस्य दशायां विनिर्दिशेद्राज्यम् ।**
**तत्रोच्चवर्गगतो यदि स तु सम्पूर्णभूमिभाग् भवति ॥**
**उच्चस्थो बलयुक्तस्सौम्यः सोमेन शोभनेन युतः ।**
**तस्य दशायां राज्यं प्राप्नोत्यन्तर्दशायाञ्च ॥**
**जन्मसमये ग्रहेन्द्रा बहुधा बलसंयुतास्तथा सुस्थाः ।**
**तेषां दशासु मतिमान् सम्पत्तिं निर्दिशेद्यथायोग्यम् ॥**
**अन्याश्च राजयोगान्यालोच्य बलाधिकस्य वर्षेषु ।**
**राज्यं ब्रूयान्मतिमान् कारकविहगपाके वा ॥**
**नीचेऽस्तगेऽरिराशौ रन्ध्रे व्ययलाभेऽथवा बलैर्हीने ।**
**तस्य दशायां भ्रंशं विनिर्दिशेद् बन्धनञ्चापि ॥’’**

तत्रापि भावराशेः भावाधिपस्य च भावस्थग्रहस्य च बलाधिक्यात् भावफलमधिकं भवति । शत्रुग्रहैः पापैरपि दृष्टियोगसम्भवे सति हानर्भवति। तथा चोक्तम्–

**‘‘अधिपः सर्वभावानां कारकः परिकीर्तितः ।**
**कर्ता भावगतः प्रोक्तः तथा तद्भाववीक्षितः ॥**
**बलहीनेऽरिनीचस्थे दुःस्थे वा पापनायके ।**
**भावस्य सम्पदं कर्तुं न शक्यं भावमाश्रितैः ॥’’ इति ।**

इत्थं येषु योगेषु समुत्पन्नाः नराः राजानो भवेयुरिति फलकथनात्पूर्वं जातके सत्यपि राजयोगाः तेषां भङ्गाः अहोस्वित् तदपवादकर्तृकयोगाः वर्तन्ते वा इति सम्यक् निरीक्षणपरीक्षणानन्तरमेव इमे राजयोगाः समादेश्याः भवन्तीति प्रविचिन्तनीयः । एवं समासतः प्रतिपादितेऽस्मिन् विषये येऽत्र गुणा ते ग्राह्याः । ये च दोषाः सदयं ते मर्षणीया इति साञ्जलिबन्धं सहृदयान् प्रार्थयेति शम् ।

**पादटिप्पणी**

1. प्र. मा. अ. 1 श्लो. सं.–9
2. ल. पा. यो. अ. श्लो. सं.–7
3. बृ. पा. हो. शा. अ–25 श्लो. सं.–11, 12
4. बृ. जा. रा. अ.–1 भ. टी. पृ. सं.–31
5. ज्यो. श. को. पृ. सं.–125

6. बृ. जा. अ. प्र. वृ. सं.–84
7. क. दी. अ–15 श्लो. सं.–30
8. बृ. पा. हो. अ.–25, श्लो. सं.–15
9. जा. पा. अ.–6 श्लो. सं.–1
10. तत्रैव अ–6 श्लो. सं.–2
11. जा भ रा भ श्लो. सं.–1
12. तत्रैव रा. भ श्लो. सं.–2
13. जा. त पृ. सं.–406
14. जा. भ. रा. भ. श्लो. सं.–5
15. स. चि अ–9 श्लो. सं.–67
16. जा. पा अ–6 श्लो. सं.–21
17. जा. पा. अ–6 श्लो. सं.–22
18. उ का ग्र भा स्व श्लो. सं.–2
19. जा. पा. अ–6 श्लो. सं.–26
20. जा. पा. अ–6 श्लो. सं.–25
21. जा. पा. अ–6 श्लो. सं.–39
22. सं. चि अ–9 श्लो. सं.–69
23. ज. पा. अ–6 श्लो. सं.–43
24. जा. पा. अ–6 श्लो. सं.–45
25. बृ. पा. हो. शा. अ–38 श्लौ. सं.–11
26. बृ. जा. अ–13 श्लो. सं.–3
27. जा. पा. अ–7 श्लो. सं.–83
28. बृ. जा. अ–13 श्लो. सं.–6
29. बृ. जा. द. आ. टी. पृ. सं–181
30. जा. भ. रा. भ. श्लो. सं.–4
31. जा. त. पृ. सं.–406
32. बृ. जा. द. आ. टी. पृ. सं.–279
33. बृ. जा. द. अ. टी. पृ. सं.–275

**परिशीलितग्रन्थाः**


1. प्रश्नमार्गः
2. लघुपाराशरीपभाष्यम्

3. बृहत्पाराशरहोराशास्त्रम्
4. ज्यौतिषशब्दकोषः
5. बृहज्जातकम्
6. फलदीपिका
7. जातकपारिजातः
8. सर्वार्थचिन्तामणिः
9. जातकाभरणम्
10. उत्तरकालामृतम्

**आचार्यः**
**( ज्योतिषविभागः )**
**राष्ट्रियसंस्कृतसंस्थानम् ( मा.वि. )**
**जयपूर परिसर**



# वृष्टिविज्ञाने सूर्यप्रभावविमर्शः

✍डॉ. धनञ्जयमणित्रिपाठी

वृष्टिविज्ञानं संहितोक्तं स्वतन्त्रविज्ञानमस्ति परं तावदस्य यथार्थनिरूपणं न कर्तुं शक्यते यावत् दिव्यप्रभावः, नाभसप्रभावः, भौमप्रभावः, मिश्रप्रभावः, समुद्रविज्ञानं, भूगोलीयकटिबन्धभेदाः । भूगोलीय वातावरणं वातचक्रं, स्थानीयजलवायुः, वनस्पतयः, ऋतुचक्रं, शीतोष्णचक्रयोः भूगोलीय- निष्पत्तिः प्रभृतयश्च सन्दर्भाः स्वतन्त्ररूपेण सम्यक् परीक्षिताः न स्युस्तावत् वृष्टितत्त्वस्य दिग्देशकालभेदैः सम्यक् निर्धारणं न कर्तुं शक्यते। अत एवेदं विज्ञानं संघीयोद्यमेन साध्यत्वात् संहितान्तर्गतं वराहमिहिरेण परिगणितम् ।[1] यद्यपि वृष्टिविज्ञानं संहितान्तर्गतमेव परिगण्यते तत्र सर्वे विषयाः स्वतन्त्रतया विनिश्चत्य अस्य कथं यर्थानिर्धारणं भवेदिति प्राप्तप्राचीनसंकेतानां नव्यपरीक्षणानुरोधेन अनुशीलनस्य समवेतप्रयोजनं वर्तत एव परं प्राचीनमूलमनुसृत्य नाद्यतनं यावच्छवतन्त्रेऽपि भारते कुत्रापि संघीययोजनं दृश्यते ।

उत्तरमयनमतीत्यातिक्रम्य व्यावृत्तः प्रत्यावर्त्तितः सूर्यः क्षेमसस्य वृद्धिकारो भवेय्यदि प्रकृतिस्थः स्यादन्यथा विकृतगत्या भयप्रदो भवति । यथा –

**उत्तरमयनमतीत्य व्यावृत्तः क्षेमशस्य वृद्धिकरः ।**
**प्रकृतिस्थश्चाप्येवं विकृतगतिर्भयकृदुष्णांशु ॥**

इत्यनेन सूर्यस्य कक्षावृद्धे ह्रासस्यापि सङ्केतः प्राप्यते । सुवृष्ट्या सस्यवृद्धिः स्यान्नान्यथेति । सूर्ये चन्द्रे च तामसकीलसंज्ञकाः त्रयस्त्रिंशत् राहुसुताः केतवः दृश्यन्ते । अस्यैकादशवर्षात्मकं चक्रं नव्यैरपि निर्धारितम् । एतेषां दर्शनं सम्प्रति चाक्षुषदृष्ट्या न कर्तुं शक्यते । यस्मिन् भूभागे सूर्यबिम्बस्थाः कीलकादयः दृश्यन्ते तत्र दुर्भिक्षं वृष्टिनाशः

नानाविध प्रकृतिकोत्पाताः देशविप्लवः परचक्रभयञ्च अपि च अवर्षणं हिमराशेर्विनाशश्च प्रभृतिनि फलानि भवन्ति । इत्यनेन सिद्धयति यत् वृष्टिचक्रनिर्धारकसमान्यसिद्धान्ताः ग्रहयोगाः निमित्तान्यापि सूर्यस्य विशेषप्रभावेण न भवान्ति फलदाः । सूर्यस्योर्ध्वकिरणः पीतः श्वेतः धूमश्च सेनापति प्रभृतीनां विनाशको भवति । दुर्भिक्षं शस्यभयं चापि करोति । परं यदि शीघ्रं वर्षणं जायते तदा कल्याणं बोध्यम् ।

शिशिरः ताम्रः कपिलः । बसन्तः हरितः वा वुंजकुमवर्णः । ग्रीष्मः पाण्डुवर्णः । इषत् श्वेतवर्णः वा स्वर्णवर्णश्च । वर्षा – शुक्लवर्णः। शरत् कमलोदराभः । हेमन्ते रक्तवर्णः । एवं वर्षाकाले स्वच्छः सर्वत्र्तुषु तुल्यवर्णः सूर्यः शुभप्रदः सुभिक्षप्रदो भवतीति ।[8]

अत्र वर्णसिद्धान्तः ऋतुभेदेन भूगोलीय वातावरणसापेक्षत्वेन निरूपितः दृश्यते । सुभिक्षं नाम पोषकतत्त्वानां प्राचुर्यं यदा पृथिव्यां जायते । तदेव सुभिक्षमिति कथ्यते ।[9] वर्षास्वसितः करोत्यनावृष्टिम् ।[10] सूर्यः यदि सुरचापपाटिततनुस्तदा प्रावृट्काले सद्यः वृष्टिः करोति । शिरीषपुष्पाभः वर्षाकाले सद्यः वृष्टिं करोति ।[12] शिखिपत्रनिभः सूर्यः द्वादशशब्दानि वर्षणं न करोति ।[13] प्रहरणसदृशैः मेघैः सन्ध्याद्वये स्थगितो रविः युद्धभयं करोति ।[14] एवं सूर्यस्य वर्णभेदेन राश्मवर्णभेदेन च विभिन्न रूपक शुभाशुभप्रभावाः भवान्त ते परीक्षणीया एवा ।[15]

प्रतिसूर्यस्य प्रभावः दिवसकृतः प्रतिसूर्यो जलकृदुदग्दक्षिणे स्थितोऽनिलकृत् । उभयस्थः सलिलभयं.... ।।[16]

सूर्यस्य शुभलक्षणानि अमलवपुरवक्रमण्डलः स्पुटविपुलामल–दीर्घदीधितिः । अविकृततनुवर्णचिह्नभृज्जगति करोति शिवं दिवाकरः ।[17]

उपर्युक्तान्वेषणद्वयं चाक्षुषप्रमाणसिद्धं भूगोलीयवातावरणे किदृशं किदृशर्लक्षणैर्युक्तः सूर्यः शिवं कल्याणं करोतीति सर्वविध सुभिक्षे हेतुत्वं निरूपितं वराहेण । सूर्यस्योत्तर पाश्वे प्रतिसूर्यः सांस्थतः वायुसंचारः यदि

पाश्वद्वये प्रतिसूर्यः दृश्यते तदा जलभयं जलाप्लावनं ज्ञेयम् । राजभयं जनमारक योगाश्चापि सूर्यबिम्बस्य मेघाच्छादितत्वेन दीप्तमेघखण्डस्य प्रतिसूर्यत्वेन प्रतीत्या प्रभावः बोध्याः । अत एव वृष्टिविज्ञानमपि सूर्यं विहाय नाधिकदीर्घपरिणामस्याकलन क्षमममिति मे मतिः ।

सूर्यस्य प्रकाशेन हि चन्द्रादयोऽपि दीप्ताः सान्त । ग्रहाणां परप्रकाशग्रहणसामर्थ्यादेव ग्रहत्वं ग्राहकत्वं गतिशीलत्वं चारोप्यते ।[18] सूर्यरश्मिः चन्द्रमा गन्धर्वः ।[19] सूर्यः गन्धर्वः रश्मयोऽपरसरः ।[20] अप्सुरसरणादपसरेति ।[21]

एवं वैदिकप्रमाणैः सिद्धतत्त्वानामाधुनिक-विज्ञानसम्मतत्वेन वृष्टिविज्ञानस्य मूलं सूर्येण सम्बद्धमिति । कथं ब्रह्माण्डे गंगत्त्वं जलतत्त्वं च प्रकटितमिति परमेष्ठी सोमस्य क्षरणात् सूर्यकेन्द्रनिष्पत्या मण्डलनिष्पत्या च भूगोलीया सोमचव्रं वरूणात्मवं चव्रं च चक्रगत्या समग्रसौरमण्डले प्रचलतीति विद्यावाचस्पति मधुसूदन ओझा महोदयानां[22] तस्य शिष्यपरम्परायाः ग्रन्थानुशीलनेन सम्प्रत्यपि वैदिकविज्ञानस्य तत्रापि ब्रह्माण्डीय सोमतत्त्वादारभ्य भूगोलीय ध्रुवद्वये महार्णवे च जलीयचव्रं कथं सौरमण्डलीय यज्ञाज्जलोत्पत्तिरिति[23] प्रमाणं नव्यान्वेषणस्य परिप्रेक्ष्येऽप्यन्वेषणीयमेव ।

सोमकिरणाश्चापिचन्द्रमण्डलयीपरावत्र्यनैवस्तथा चन्दपिण्डे मूच्छिताः रविकिरणाः चन्द्रप्रकाशकिरणैः भूगोलमपि प्रकाशयन्तीति प्रमाणमपि वेदादारभ्य ज्योतिषसंहितोक्त प्रमाणैरप्यनुशीलनीयमेव । सूर्यस्यैव प्रकाशः ग्रहेभ्यः मूच्छिताः[24]पृथिव्यां परावर्तिताः सन्तः समागच्छन्तीति । वृष्टिविज्ञानेऽपि[25] दिव्यनाभसभौममिश्रयोगज प्रभावाणां वर्गीकरणं वृष्टियोग निर्धारणावसरे दृश्यन्त । अतएवात्र प्रबन्धविस्तर भयात् वृष्टिविज्ञानसम्बद्ध सौरप्रभाव-मूलस्यैवात्र निरूपणं क्रियते । दिव्यनाभसभौमप्रभावानां समवेत

वर्गीकरणं विधाय वृष्टिविज्ञानसम्बद्ध त्रिलोकीयप्रभावा-स्तत्रापि सौरमुख्यत्वेन निरूपणमेवात्र लक्ष्यम् ।

**वृष्टिविज्ञानस्य प्रयोजनम्**[26]

अन्नं जगतः प्राणाः प्रावृट्कालस्य चान्नमायत्तम् । यस्मादतः परीक्ष्यः प्रावृट्कालः प्रयत्नेन ।। अत्र सम्वतसरं यावत्परिक्षणं तत्रापि विशेषरूपेण वृष्टिकाल एव ।

**वृष्टिविज्ञानस्य परम्परा**

कृतादौ काश्यपेन त्रैतादौ वसिष्ठेन द्वापरादौ गर्गेन द्वापरान्ते पराशरेनण प्रथमकलिलाग्रणकाले वङ्कोण ततः सर्वेषां निष्कर्षमवर्धाय वराहेण बृहत्संहितायां वृष्टिविज्ञानस्य निष्कर्षबीजं परीक्ष्यं संकलिमित्यागमः। अन्नं विना जीवनधारणक्षमत्वं जगति न स्यादतः प्राकृतिकवृष्टिचक्राभावेऽमृतजलं पेयजलं दुर्लभं भविष्यति ।[27]

**मेघेत्पत्तौ प्राकृतिक नियमः**

समुद्राणां तथा भूपृष्ठीय जलाशयानां जलानि सूर्यकिरणैः बाष्परूपेणोत्पत्या भूगोलीयान्तरिक्षस्य भूसम्पृक्त प्रथमतलस्योर्ध्वे मेघो भवति । अर्थात् बाष्परूपेणान्तरिक्षे निश्चितकालपर्यन्तमुर्ध्वं गच्छति । ते बाष्पकणाः वायुयोगेन संघीभूताः मेघरूपेण दृश्यन्ते । चन्द्रचारेण मेघगर्भः गर्भपृष्ट्या सौरचारेण वर्षति । अतः ऋषिणां लक्षणानि प्रत्यक्षपरीक्षण विधानानां संकेताश्च सत्प्रत्यप्यनुशीलनीया एव सान्त ।[28]

**गर्भलक्षणम्**

कार्तिक शुक्लान्ताद्गर्भधारणमिति केचित् मार्गशीर्ष शुक्लप्रतिपदादारभ्य गर्भपरीक्षणं विधेयमिति गर्भविधानम् । यस्मिन्नक्षत्रे दैनिकचन्द्रनक्षत्रक्रमे गर्भ धार्यते तस्मात् पञ्चनवतिशतदिवसानन्तरं सावनदिन प्रमाणेन वर्षणं जायते यदि गर्भच्युतिः न स्यात् ।[29] सौरसापेक्षचान्द्रमासस्य पक्षभेदेन गर्भः कथं भवतीति वर्णनं च दिक्सस्य

गर्भः रात्रौ । रात्रिगर्भः गर्भः दिने । प्रातः सन्ध्योद्भूतः सायं सन्ध्यायां सायं सन्ध्योद्भूतः गर्भः, प्रातः सन्ध्यायां गर्भच्युताभावे वर्षति ।[30] मार्गशीर्षस्य गर्भधारणमपि मन्दवृष्टिकरं भवति । पौषशक्ले धारितः गर्भः प्रचूर वृष्टिकरा भवति ।[31] सूर्यसंयुतिमासस्यैव ग्रहणं कृष्णान्त मासरूपेण दृश्यते न तु शुक्लान्तमासस्य ग्रहणमास्त । पूर्णिमान्तमासस्य नक्षत्रसंयुत्या प्रवृत्तिस्तत्रामान्तस्य सूर्यसंयुक्ता प्रवृत्तिरित्यत्रापि सूर्यस्यैव प्राधान्यम् ।[32]

**मेघस्य वायोश्च लक्षणं सम्बन्धश्च**

मेघेत्पतौ वयोरूत्पत्तौ मूलकारणे सूर्य एव । सूर्यकिरणस्तप्ताः जलराशयः मेघत्वं प्राप्नुवन्त बाष्पकणैः । शीतयोगेन जलबिन्दुरूपेण पतति। तप्तवातारणेन वायुरूध्वं गच्छति । रिक्तस्थानं पूरयितु शीतलवायुः रिक्तस्थानं प्रति वाति फलतः वातस्य संचरणं जायते । अत्रापि कारणं सूर्य एव ।[33] वायु संचारेण संघीभूताः बाष्पकणाः मेघत्वं प्राप्य वातगत्या पूर्वोद्भूताः पश्चिमें पश्चिमोत्थः पूर्वे दक्षिणोत्थाः चोत्तरे तथोत्तरोत्थाश्च दक्षिण वायुचारेण वर्षति ।[34]

**गर्भसम्भव लक्षणम्**

**तल्लक्षणनिमुनिभिर्यानि निबद्धानि तानि दृष्ट्वेदम् ।**
**क्रियते गर्भ पराशर काश्यप वङ्कादि रचितानि ॥**[35]

इत्यनेन कृतादारभ्य विज्ञानस्य परम्परा प्रदश्य तेषामन्वेषण-निष्कर्षाणांस्वानुरोधेन स्वकाजिकमन्वेषणसापेक्षत्वेन गर्भलक्षणं गर्भधारणं प्रवर्षणमिति त्रिविधत्वेन वर्गीकरणं विधायास्य विज्ञानस्य विस्तृतक्रमस्य निष्कर्षः बृहत्संहितायां सम्यक् दृश्यते । अतोऽत्र गर्भलक्षणमेव निष्कर्षतः प्रवक्ष्ये कथयामिति ।[36] कथं मेघगर्भपरीक्षणं सम्वत्सरं यावत् समग्राहोरात्रानुरोधेन कार्यमिति संकेतः परीक्षणगम्यः यथा[37]

**दैवविद् विहितचितो द्युनिशं यो गर्भलक्षणं भवति ।**
**तस्य मुनेरिववाणी न भवति मिथ्याम्बुनिर्देशे ॥**

कथं वाणी न भवति मिथ्येति निरन्तरमेव गर्भलक्षणपरीक्षणं कार्यमिति ।

**कदातः समारभ्य गर्भपरीक्षणं कार्यमिति कालप्रमाणम्** – यथा –

**केचित् वदान्त कात्तिकशुक्लान्तमतीतय गर्भदिवसाः स्यु ।**
**न च तन्मतं बहूना गर्भादीनां मतं वक्ष्ये ॥**

अग्रहायणारम्भादेव गर्भं परीक्षयेदिति सर्वसामान्यसिद्धान्तः ।

**कालदृष्ट्या गर्भस्य प्रमाणम्**[39]

**मार्गशिरः सितपक्षप्रतिपत्प्रभृतिक्षपाकरेऽषाढाम् ।**
**पूर्वां वा समुपगते गर्भाणां लक्षणं ज्ञेयम् ॥**

अग्रहायणस्य शुक्लादारभ्य यदा चन्द्र पूर्वाषाढनक्षत्रासन्ने भवति तस्मादेव चान्द्रनक्षत्रयुतिकालादेव गर्भलक्षणं परीक्षणीयम् ।

**गर्भपसवकाल**[40]

चान्दचारेण गर्भस्थापनं सौरनक्षत्रचारेण प्रसव इति नियमः । यास्मन् चन्द्रनक्षत्रे गर्भधारणं तस्मात् 195 दिवसे सावनदिवसे प्रमाणेन सौरचारेण मेघस्य प्रसवो ज्ञेयः । शुल्कपक्षेधृतगर्भः कृष्णपक्षे वर्षति । कृष्णपक्षेधृतगर्भः शुक्लपक्षे वर्षति ।

दिनेधृतगर्भः रात्रौ वर्षति । रात्रिजातगर्भः दिने वर्षति । प्रातः सन्ध्यायां धृतगर्भः सायं सन्ध्यायां वर्षति । एवं सायं धृतगर्भः प्रातः सन्ध्यायां वर्षति । इति गर्भधारणप्रसवयोः कालभेदस्त्वहोरात्रयजन्यः चन्द्रसौरचारयोर्निष्पत्तिजन्यश्च । 11.1 दिग्भेदने वात संचारभेदेनप्रसवादि विचारः ।[41]

**गर्भसम्भवलक्षणम्**

चन्द्रेण नक्षैत्रैश्च युक्ताकाशे दर्शनं मेघानां मधुरशब्दाः विद्युल्लता प्रतिसूर्यादिभिर्युक्ता पूर्वापरा च सन्ध्या विपुलाः पक्षिणः मृगसंघाः प्रदक्षिणचराः ग्रहक्रषकिरणाः रविकिरणाश्च स्निग्धाः ग्रहाः

निरूपसर्गारर्थादुत्पातरहिताः गतिशीलाः निरूपसृष्टाज्रास्तरवः नरचतुष्पदाश्च हृष्टाः प्रसन्नाः यदि स्युस्तदैव गर्भाणां पुष्टिकराः ज्ञेयाः । ऋतुचक्रानुरोधेन स्वभावजनितो कालगुणः निश्चितत्त्वेन परीक्षणीय इत्यपि संकेतः वराहेण कृत इति । तद्यथा ऋतुभेदेनोपर्युक्तगर्भलक्षणं परिवत्र्यते ।[42]

3. **गर्भकालिक मेघस्य लक्षणम्**[43]

श्वेतवर्णः । तमालपत्रवर्णः । नीलकमलसंन्निभः वा अंजनाभासः जलचरसत्वाकराः मेघाः गर्भेषु प्रभूतजलाः जायन्ते । तीव्रसूर्यकिरणैरभितप्ताः मन्दमारूता जलदाः रूषिता इव प्रसवकाले रविचारनिष्पत्या प्रभूतजलदाः भवान्त । इत्याकृत्या वर्णेन रविकिरणप्रमाण निष्पत्या वातगत्या च मेघस्य धृतगर्भेण सह सावन कालप्रमाणेन सूर्योदयनिष्पत्या गर्भाधानकालिक सावनादिवसाधिष्ठितचान्दनक्षत्रात् 195 तमे सावने कथितकालनयिमेन वर्षणं करोतीति गर्गाद्विराहान्त परीक्षितविधानं सम्प्रत्यपि दीर्घकालिकाभिज्ञानार्थं प्रयोज्यमेव ।

4. **गर्भनाशक लक्षणम्**[44]

गर्भाधानकालादेवोल्कापातः । अशनिपातः पांशुपतः । दिग्दाहाः। क्षितिकम्पः भूगोलीय भागविशेषे । खपुरदर्शनं सूर्यबिम्बे चन्द्रबिम्बे तामसकीलकसंज्ञकानां राहुसुतकेतूकानां दर्शनानि भूगोलीयसूभिक्ष दुर्भिक्षचक्र निर्धारकाणां पापप्रद केमूनामुदयाः । ग्रहयुद्धानि । निर्घात्रः वृष्टिविकारः । परिघविकारः । इन्द्रधनुविकारः ग्रहणं चन्द्रादनन्तरं सूर्यस्य ग्रहणं च गोलीय लक्षणानि भूगोलीयान्तरिक्षास्थत भूसंपृक्तातलेऽपि समुपास्थत मेघगर्भस्य विनाशं जनयान्त ।

5. **अत्रापवादनियमाः**[45]

ऋतुस्वभावजनितलक्षणानां साधकत्वं विपरीतानां बाधकत्वमि-त्यप्यनुशीलनीयम् । गर्भविनाशकयोगे सर्वं विपरीतमेव जायते । गर्भकालिक चान्द्रचारेनक्षत्राणां वर्गीकरणं सर्वऋत्वाभिप्रायेण अतिवृष्टि-

प्रदगर्भधारकचान्द्रनक्षत्राणि[46]पूर्वभाद्रपदमुत्तरभाद्रपदमुत्तराषाढाः पूर्वाषाढः रोहिणी च यदि निरूपद्रवाधाने स्युस्तदा प्रसवकालेऽति वर्षणं जायते ।

**गर्भकालिकचान्द्रनक्षत्रवशेन दीर्घकालं यावत् वृष्टियोगः**[47]

यदि गर्भपोषणकाले चैतानि पञ्चनक्षत्राणि चान्द्रचारक्रमेण स्युसतदापि त्रिविद्योत्पातशून्यत्वेन दिव्यनाभसभौसम्बद्धत्वेन च दीर्घकालं यावत् वर्षति प्रसवकाले ।

**पूर्वोक्तयोगानां प्रसवे कालविधानम्**[48]

पूर्वोक्त पञ्चनक्षत्रेषु यदि मार्गशीर्षे गर्भपोषणं वृद्धिश्च स्यात्तदा गर्भधारणदिवसात 195 तमे दिवसे सावनदिनप्रमाणेन वर्षणारम्भो 8 दिवस पर्यन्तं पौषे यद्युपर्युत्ते गर्भपोषणं तदा 6 दिनानि माघे यदि पोषण तदा 16 दिनानि फाल्गुने 20 दिनानि चैत्रे 20 दिनानि वैशाखे मेघगर्भपृष्टे सति दिनत्रयं वर्षति प्राचूर्येण जलं प्रयच्छति । एते सर्वेयोगाः परीक्षणगम्याः सन्तीति संहितोक्तविधानानामनुशीलनेन ज्ञायते । अत एवाधुनापि संहितोक्तपरीक्षणविधानानि साम्प्रतिकपरीक्षणविधानैः संयोज्य समीक्षणं सर्वथापेक्षते ।

**निमित्तै वर्षणस्य प्रदेशनिर्धारणम्**[49]

पञ्चनिमित्तैः धृतगर्भेण प्रसवकाले 500 मील क्षेत्रं व्याप्य मेघः वर्षति । 100 योजनं भास्करीय प्रमाणेन 500 क्रोशार्धानि द्वाभ्यां निमित्ताभ्यां 121/2 योजनान्यर्थात् 12.5 क्र 5 - 62.5 क्रोशार्धानि तथैकेन निमित्तेन 5 योजनपर्यन्तं 25 क्रोशार्ध यावद् वर्षति । पूर्वोक्तं गर्भधारणलक्षणादीनां निरूपसर्गादीनां परीक्षण निष्कर्षमवगम्येदं निर्धारणं घटत इति ।

निमित्तयुक्तगर्भेण वर्षणकाले जलमात्रा निर्धारणम्[50] 5 निमित्तै 1 द्रोणः । यदि पवनस्य निमित्तेन गर्भधारणं तदाढकत्रयं विद्युता 6 आढकानि मेघजन्य निमित्तेन 9 आढकानि स्तनितेन मेघशब्दजन्यनिमित्तेन

12 आढकानि वर्षति । 4 आढकः – 1 द्रोणः । धनुप्रमाणेन भूपृष्ठीयभागे शरपातेन यावन्मतं प्रदेशं व्याप्नोति तावत् पर्यन्तं क्षेत्रे द्रोणाति वर्षणं ज्ञेयम् ।

वृष्टिनिर्धारणक ग्रहयोगाः गर्भाधानात् वर्षणान्तं परीक्षणीययोगाः[51] । प्रायशः पञ्चाङ्गकाराः स्व–स्व देशभेदेन ग्रहयोगान् परीक्षयान्त परं पञ्चविधानिमित्तैः सावं न परीक्षयन्तीति दोषः । मेघाधानकाले निमित्तरहितातिवर्षणेन गर्भनाशः । गर्भाधानकालिक चान्द्रनक्षत्रम् क्र प्रापयोगः क्र पापदृष्टिस्दा गर्भधारणे काकपातः वङ्कापातः मत्स्यादीनां वर्षणं वर्षणकालेऽवर्षणं च करोति गर्भस्रावत्वात् ।

**गर्भकालिक निमित्तानि**[52]

1. ग्रहणामुदया 2. ग्रहाणामस्तगतत्वम् 3. नक्षत्राभिप्रायिक संचरणम् 4. चन्द्रग्रहसमागमः 5. ग्रहयुतिः 6. ग्रहक्रषसंयुयतिः 7. मण्डलव्याप्तः 8. संक्रमणः 9. पक्षक्षयः 10. पक्षवृद्धिः 11. सूर्यस्य तीक्ष्णरश्मयः 12. अयनान्तद्वयम् 13. गोलारम्भः गोलान्तश्च 14. चान्द्रनक्षत्रानुरोधेन मार्गशीषादि वैसाखान्तं साम्प्रतिक चान्द्रमास क्रमेण मेघाधानकालस्य निरन्तरं परीक्षणं पंचदशविधानैः पंचनिमित्तैश्च परीक्षितमेघगर्भस्य वर्षणादीनां निर्धारणं सम्यक्कर्त्रुं शक्यते । अत्र कादम्बिन्याः समीक्षणमपि द्रष्टव्यम् ।

**निःसान्दग्ध निर्धारणं विधानम्**[53]

पुष्टगर्भ ग्रहोपघातादिभिर्दिव्यानाभसभौममिश्रनिमित्तैः यदि न जलप्रदस्तदा द्वितीयाधानकाले उप्पलवर्षण सोत्पलं युक्तवर्षणं च करोति । इति करकपात हेतुः । अत्र धृतगर्भस्यावर्षणादेव करकोत्पत्तिरिति । कथं करकत्वमिति शीतांशवातांशयोर्निष्पत्या सूर्यकिरणैः जलपांशवः कठिन्यं प्राप्य[54] करकत्वमेति । पयास्वन्याः पयः यथा चिरकालयुतं काठिन्यं याति तद्वत्सलिलं वर्षणकालातीतं काठिन्यमुपयाति । तर्हि पुष्टगर्भेऽपि

मध्यकालिक वर्षणाबाधकयोगैस्त्त्वैश्चावर्षणं करोति । वायुना । जलेन । विद्युता । मेघस्याकृत्या । वर्णैः शब्दश्च सौरचान्द्रादीनां योगदृष्ट्यादि संचारादिभिः भोमवातावरणं भूगोलीयान्तरिक्षं पञ्चभूतानां भूपृष्ठीय चक्राणि भूपृष्ठीयकटिबन्धभेदाः स्थानीयं वातावरणं भूपृष्ठखण्ड-सापेक्षत्वेनोपर्युक्त्या परीक्ष्य कदा कुत्र क्रियान्मतप्रमाणैः वर्षणं भविष्यतीति निर्धारणं सम्प्रत्यपि कर्तुं शक्यते । अतएवोपर्युक्त सापेक्षत्वेन मेघस्य गर्भधारणं प्रवर्षणं प्रमाणनिर्धारणं नक्षत्रभेदेन वृष्टिप्रमाण निर्धारणं रोहिणीयोगस्य परीक्षणं पञ्चनिमित्तैः शुभशकुनैश्च यज्ञमन्त्रादियोगेन रोहिणीयोगगते चन्द्र तास्मन्नेव मघादीनामपि आकृति प्रकृति स्वरूपवर्ण शब्दादिभिः परीक्षणं तास्मन् परीक्षित प्रामणे सम्बत्सराभिप्रायेण प्रवर्षणकालिकसुभिक्षदुर्भिक्षादीनां निर्धारवं विधानं ज्योतिष संहितोक्त-मनुशीलनीयमेवा स्त ।[55] मेघादीनां शुभाशुभत्वं विभिन्नोत्पातानां परीक्षणं घटस्थापनं चतुर्दिक्षु रोहिण्याचन्दसमागमः प्रभावः रोहिणीशकटस्य भेदनप्रभावः दिग्भेदेन रोहिणीशकटस्य भेदनप्रभावः भिद्यत इति वराहोक्त संकेतः सर्वत्र दृश्यते कामचक्रे रोहिणीचन्द्रयोर्युतौ विशेष प्रभावादिग्भेदेन मध्यपश्चिम पूर्वोत्तराग्नेयादि दिग्भेदेन प्रभावभेदस्तथा रोहिणी पुञ्जस्थ योगतारकस्य चन्द्रकृतच्छादनेन वृष्टिजन्यं विभिन्नप्रभावं च द्योतयति । अतएवायं रोहिणीयोगः वराहेण[56] वृष्टियोगः सम्यक् सानुष्ठाानं समीक्षितः। शकुनं भूपृष्ठस्थ सजीव वनस्पति स्थावरादीनां वातावरणादीनामेघ परीक्षक विधानमपि ध्येयमेव । अष्टविध निमित्तैरित्यप्यनुशीलनीयमेव । एवमेव स्वातीयोगाः । आषाढीयोगाः वातचक्रे दिग्भेदेन निर्धारणं सद्योवर्षणं सम्बद्धानि निमित्तानि शकुनानि ग्रहक्रषयोगाः । चन्द्रस्य वर्षणयोगे प्राधान्यं प्रश्नवशेन । चेष्टावशेन सूर्यकिरणैः भौमनिमित्तैः स्वादः वर्णः । आकाशीय वातावरणं लवणविकृतिः पवनविगम स्थलगामिनो झषाः माण्डूकानां रटनशीलाः शब्दाः सद्यः वर्षणं द्योतयन्ति । बिडाल चेष्टाभिः

बालचेष्टाभिः मेघादिवर्णैः सूर्यकिरणैः चन्द्रकिरणैः लौहादिगन्धैः गिरयोऽञ्जनचूर्णसन्निभाः बाष्पनिरूद्धकन्दराः चन्द्रस्य परिवेषः कुकवाकुनत्रोपमः प्रभृतयो भूपृष्ठीय सन्दर्भाः भौमान्तरिक्षस्य विषयाश्च सद्यः वृष्टिनिर्धारणे महत्वपूर्णाः परीक्षणीयाश्च विद्यन्ते ।

**सद्यः वृष्टिज्ञाने निर्धारकसन्दर्भाः**[57]

घातं विना पिपीलिकानामण्डोपसङ्क्रान्तिः सर्पाणां मैथुनं वृक्षेऽवरोहः गवां प्लुतं च सद्यः वर्षणं द्योतयति ।

कृकलासादीनां तरूशिखरोपगतत्वं तथा गगनतलास्थ दृष्टि–निपाताः गवां रविवीक्षणकूर्ध्वदृष्टिश्च शीघ्रमेव वर्षणं द्योतयति । एवं पशवः यदि बहिर्गन्तुं नच्छन्ति ।

श्वानचेष्टया तथान्यप्रमाणैः सद्यः वर्षणस्य निर्धारणम्[58] यदा गृहपटलेषु स्थिताः कुक्कुराः रूदान्त वा वियन्मुखाः पश्यान्त रूदन्ति च यदा ईशानकोणे दिवसेऽपि विद्युद्दर्शनं तदा सद्य एवातिवर्षणं बोध्यम् । एवं न केवलं दीर्घकालिक वर्षणस्य निर्धारणं दृश्यतेऽपि तु सद्यः वृष्टिनिधारणेऽपि प्रयुक्ता सिद्धान्ताः तथ्यगता एव सान्ति । चन्द्रवर्णभेदेन सद्यः वृष्टिज्ञानं रात्रौ कथं भवेत्त्था मेघगर्जनैः रात्रौ सविद्युत् मेघगर्जनं दिवा रूधिरनिभा दण्डवत् स्थिता विद्युत् पुरतः शीतलः पवनः शीघ्रमेव सलिलागमं द्योतयति ।[59] वृक्षलतादिभिरपि सद्यः वर्षणं जायते । तृणाग्रे गतिशीलसरीसृपैश्चापि तथा विहङ्गादीनां चेष्टाभिश्चापि शीघ्रमेव वर्षणं ज्ञायते । सन्ध्याकालिकमेघवर्णैश्चापि मयूर शुक चापचातकवर्णसन्निभै–स्तथा जपाकुसुमपङ्जद्युतिमुपश्च तथा जलोर्मिनगनक्रकच्छप वराहमीनोपमैः मेघाकृतिभिश्चापि शीघ्रमेव वर्षणं बोध्यम् ।[60]

एवं मेघवर्णपरीक्षणेन सूर्योदयेऽस्ते चेन्द्रधनोः दर्शनेन । परिघेण प्रतिसूर्येण रोहितस्तडितः उदयास्ते परिवेषश्च सूर्यचन्द्रयोः निश्चितरूपेण सद्यः वर्षणं द्योतयाति । एवमाकाशस्य वर्णेनापि सद्यः वर्षणं ज्ञायते ।

उदये सूर्याभिमुखं पक्षिणः प्रवदान्ति तदा दिने तथास्ते यदि कुर्वान्ति तदा रात्रौ वर्षणं ज्ञेयम् ।[61] वृष्टः कारणं सूर्यस्तेन सूर्यकिरणैः वृष्टिज्ञानं रश्मिवर्णेनोदय कालप्रमाणेनामोघकिरणैस्तथास्ते पर्वत इवोच्छिताः किरणाः मेघाः भूसंपृक्तत्वेन गर्जति तदा सद्यः वर्षणं भवतीति ।[62] वर्षत्र चन्द्रः शुक्राच्छत्पमः शुभदृष्टः वा शनिश्चरात् पञ्चमः नवमश्च शुभदृष्टोऽपि जलागमनं द्योतयति ।[63]

**अन्ये वृष्टियोगाः**[64]

विभिन्न संहिता सुसम्यक् प्राप्यन्ते । तत्र प्रायशः ग्रहणामुदयास्ते समागमे मण्डलसंक्रमे पक्षक्षये सूर्यस्यायनान्ते वृष्टिनक्षत्रगतेऽर्जे अनयप्रमाणेन निरयणान्तर्भुक्तत्वेन सायन ऋतुप्रमाणेनाद्रानक्षत्रादारभ्य विशाखान्तं सूर्यस्य परमतीक्ष्णकरप्रमाणैः सर्व परीक्ष्य समीक्ष्य वृष्टिकालः निर्धारणीय इति । सर्वत्र वृष्टिविधाने सूर्यस्यैव प्राधान्यं पौरस्त्यवचनैः नवव्यप्रयोगप्रमाणैश्च सिद्धत्येव ।[65]

**ग्रहयोगाश्चापि वृष्टियोगे निभयकाः**

ग्रहाणां योगाः दृष्टिश्च सुवृष्टिकराः पापयोगेनोपद्रवाश्च ज्ञेयाः । सूर्यादग्रे पृष्ठे वा ग्रहाः मन्दगमयश्चाग्रे शीघ्रगतयः पृष्ठेऽतिवर्षणं जलाप्लावनं च द्योतयति । शुभशकुनप्रमाणेन खद्योतोऽपि सद्यः वर्षणः द्योतयति तथा शूरगालोऽपि । कुसुमलताप्रमाणेन वृ वर्षणं सुभिक्षं दुर्भिक्षं च निश्चियत इति । कृषिशास्त्रसम्बद्धं सद्यः वृष्टिनिर्धारकविधानमपि परीक्षणीयमेव।[66]

सूर्यस्य सन्ध्याद्वयमप्यनिशं सम्बत्सरान्तं परीक्षणीयमास्त । सूर्यवर्णादीनां परीक्षणं भूम्यन्तरिक्षयाः सापेक्षत्वेन करणीयमेवास्ति । दिग्दाहेनापि विशेषतः ग्रीष्मत्रौ वर्णक्रमेण शुभाशुभज्ञानं परीक्षणगम्यमेव । अन्येऽपि नाभसावयवाः दिव्येन सावं निर्घातान्तं परीक्षणीयाः ।[67] सस्य जातके द्रव्यनिश्चयः वृष्टिविज्ञाने कृषिविज्ञाने तथार्धनिर्धारणे महत्व–

पूर्णावयवाः सान्ति शुभाशकुनादीनां परिज्ञानं खञ्जनदर्शनादीनां महत्वं प्रत्यक्षावगमत्वेन सर्वविधशुभाशुभनिर्धारकत्वेन घटनाकालस्य द्योतनं संकेतं च पूर्वत एव कथं करोतीति साम्प्रति सम्बद्धवैज्ञानिवैश्चापि उत्पाताश्चतुर्विधाः महाभूत सम्बद्धाश्च मानवीयोपचार जन्य पर्यावरण प्रदूषण सम्बद्धाश्च विभिन्नरूपैः प्रकटयन्ते । अपचयशमनार्थं राष्ट्रस्य सर्वतोभावेन सर्वविधोपद्रवैः रक्षणार्थं शामकविधानं संहितोक्त च परीक्ष्यमेव भारतीयैः ।[68]

**सन्दर्भाः**

1. उपर्युक्त दिव्यप्रभावादारभ्यशोतोष्णचक्रपर्यन्तं 11 विषयाणां सम्बगद्धविज्ञानानां संहितामूलसम्बद्धनां ज्ञानैः सप्रयोग संघीय निवेशैश्च वृष्टितत्वं सद्यः वृष्टियोगाश्च तथा दीर्घकाजिकाश्च गम्याः सन्ति ।
2. भारतीय वृष्टिज्ञानेन नवीनवृष्टिविज्ञानं संयोज्य यन्त्रयोगेन सर्वाभिप्रायिक सारिणीनिर्माणं यथार्थसमीक्षणं च साविध्येन कत्र्यु शक्यते ।
3. भारते समन्वितशिक्षणमन्वेषणं च मानवकेन्द्रिवं राष्ट्रेन्द्रिवं च नास्ति । अत एव मावीयसर्वांगीण विकासकविधानानि विधानानि संस्कृतनिष्टवज्ञानानि च सुप्तान्येव सन्ति ।
4. बृहत्संहिता ।
5. बृहत्संहिता अ. 3, श्लो. 7 तः 20 या. सूर्यचन्द्रयो कलंकजन्यप्रभावः ।
6. सूर्यरश्मिः चन्द्रमागन्धर्वः इति वैदिकप्रमाणम् ।
7. बृहत्संहिता अ. 3, श्लो. 21 तः 22 या. वराहः ।
8. बृहत्संहिता अ. 3, श्लो. 23 तः 24 या. वराहः ।
9. बृहत्संहिता अ. 3, श्लो. 23 तः 40 या. वराहः ।
10. बृहत्संहिता अ. 3, श्लो. 26 वराहः ।
11. बृहत्संहिता अ. 3, श्लो. 27 वराहः ।

12. बृहत्संहिता अ. 3, श्लो. 28 वराहः ।
13. बृहत्संहिता अ. 3, श्लो. 28 वराहः ।
14. बृहत्संहिता अ. 3, श्लो. 28-29 वराहः ।
15. बृहत्संहिता अ. 3, श्लो. 28 तः 29 या. वराहः ।
16. बृहत्संहिता अ. 3, श्लो. 29 तः 36 या. वराहः ।
17. बृहत्संहिता अ. 3, श्लो. 37 तः 39 या. वराहः ।
18. बृहत्संहिता अ. 3, श्लो. 40 वराहः ।
19. बृहत्संहिता अ. 2, श्लो. 1 तः समाप्ति या. ग्रहस्य परिभाषा नवीनाद्भिन्ना वत्र्तते - वराहः तत्र नक्षत्रकेन्द्रिकस्य ग्रहसंज्ञा ग्रहकेन्द्रिकस्योपग्रहसंज्ञेति ।।
20. ऋग्वेदः ।
21. ऋग्वेदः ।
22. ऋग्वेदः, केन्द्रसम्बद्धविज्ञानानि शरीरकेन्द्रसम्बद्धमायुर्वेदश्च द्रष्टयः ।
23. कादम्बिनी विद्यावाचस्पति मधुसूदन ओझा ।
24. वैदिककालादारभ्य नवीनान्वेषणं संहितामूलेन संयोज्य परीक्षणीयम् ।
25. नवीन मेट्रोलोजी तथा बृहत्संहितयोर्मध्ये समत्वमस्ति ।
26. कादम्बिनी विद्यावाचस्पति मधुसूदन ओझा ।
27. बृहत्संहिता अ. 21, श्लो. 1 वराहः ।
28. बृहत्संहिता अ. 21, श्लो. 2-3 वराहः ।
29. बृहत्संहिता अ. 21, श्लो. 4-7 या. वराहः ।
30. बृहत्संहिता अ. 21, श्लो. 7 वराहः ।
31. बृहत्संहिता अ. 21, श्लो. 8-12 वराहः ।
32. बृहत्संहिता अ. 21, श्लो. 9-13 वराहः ।
33. बृहत्संहिता अ. 21, श्लो. 9-13 वराहः ।
34. कादम्बिनी विद्यावाचस्पति मधुसूदन ओझा ।
35. बृहत्संहिता अ. 21, श्लो. 14-22 वराहः ।
36. बृहत्संहिता अ. 21, श्लो. 23-24 वराहः ।

37. बृहत्संहिता अ. 21, श्लो. 3 वराहः ।
38. बृहत्संहिता अ. 21, श्लो. 5 वराहः ।
39. बृहत्संहिता अ. 21, श्लो. 6 वराहः ।
40. बृहत्संहिता अ. 21, श्लो. 7-8 वराहः ।
41. बृहत्संहिता अ. 21, श्लो. 9-12 वराहः ।
42. बृहत्संहिता अ. 21, श्लो. 14-18 वराहः ।
43. बृहत्संहिता अ. 21, श्लो. 19-22 वराहः ।
44. बृहत्संहिता अ. 21, श्लो. 23-24 वराहः ।
45. बृहत्संहिता अ. 21, श्लो. 25-26 वराहः ।
46. बृहत्संहिता अ. 21, श्लो. 27 वराहः ।
47. बृहत्संहिता अ. 21, श्लो. 28-29 वराहः ।
48. बृहत्संहिता अ. 21, श्लो. 29 वराहः ।
49. बृहत्संहिता अ. 21, श्लो. 30-31 वराहः ।
50. बृहत्संहिता अ. 21, श्लो. 32-33 वराहः ।
51. बृहत्संहिता अ. 21, श्लो. 34 वराहः ।
52. बृहत्संहिता अ. 21, श्लो. 35 वराहः ।
53. बृहत्संहिता 21-30 तथा अ. 40 पर्यन्तं समग्रनाभसयोगाः ग्रहयोगाश्च परीक्षणीयाः - वराहः ।
54. बृहत्संहिता 22 तः 27 समीक्षणीयाः - वराहः ।
55. बृहत्संहिता 24 योगाः परीक्षणीयाः ।
56. बृहत्संहिता 28 यागाः परीक्षणीयाः ।
57. बृहत्संहिता 24 श्लो. 10 योगाः परीक्षणीयाः ।
58. बृहत्संहिता 28 श्लो. 12 योगाः परीक्षणीयाः ।
59. बृहत्संहिता 28 श्लो. 14-15 योगाः परीक्षणीयाः ।
60. बृहत्संहिता 28 श्लो. 16-17 योगाः परीक्षणीयाः ।
61. बृहत्संहिता 28 श्लो. 18 योगाः परीक्षणीयाः ।
62. बृहत्संहिता 28 श्लो. 19-21 योगाः परीक्षणीयाः ।

63. बृहत्संहिता 28 श्लो. 20-22 योगाः परीक्षणीयाः ।
64. कादम्बिनी - वि. वा. मधुसूदन ओझा ।
65. बृहत्संहिता 28 श्लो. 22 तः योगाः परीक्षणीयाः ।
66. बृहत्संहिता 21 तः 47 समीक्षणीया एव परीक्षणैः साकम् ।
67. संहितास्कन्ध का इतिहास - डॉ. सच्चिदानन्दमिश्रः ।
68. भारतीयऋतुविज्ञान, डॉ. धुनिराम त्रिपाठी ।

**संस्कृत विभागः**
**जामिया मिल्लिया इस्लामिया**
**(केन्द्रियविश्वविद्यालयः)**
**नवदेहली - ११० ०२५ ।**



# नक्षत्रविज्ञानम्

डा. सुनीता

ज्योतिष्शास्त्रं ग्रहनक्षत्रादीनां प्रतिपादकं शास्त्रं विद्यते अत्र येषामङ्गानां साहाय्येन शुभाशुभफलरूपप्रयोजनं साधयते तेषु साररूपेण अत्र साधनद्वयमेव वर्तते । ग्रहाः नक्षत्राणि च । तयोः ग्रहनत्ररूपाङ्गयोः ग्रहेषु चलत्वमस्ति, नक्षत्रेषु च स्थिरत्वं विद्यते । नक्षत्रशब्दमाधारीकृत्य अर्थः भवति न क्षरति इति नक्षत्रम् अर्थात् यस्य क्षरणं ह्रासो वा न भवति नक्षत्राणां स्वकीया काचित् गतिः न उत्पद्यते । स्वगोले स्थितेषु पिण्डेषु ये केचन स्थिराः पिण्डाः सन्ति तेषां नक्षत्रसंज्ञा अभिधीयते यथोक्तं होराशास्त्रे –

**तानि नक्षत्रनामानि स्थिरस्थानानि यानि वै इति ।**

यद्यपि बहवः स्थिरपिण्डाः खगोले स्थिताः सन्ति तथापि तेषां गुण–आकार–स्थिति–समानताधारेण सप्तविंशतिरिति विभाजनं कृतम् । ते सन्ति – अश्विनी, भरणी, कृत्तिका, रोहिणी, मृगशिरा, आर्द्रा, पुनर्वसू, पुष्यः, आश्लेषा, मघा, पूर्वा फल्गुनी, उत्तरा फल्गुनी, हस्त, चित्र, स्वाती, विशाखा, अनुराधा, ज्येष्ठा, मूलम्, पूर्वाषाढा, उत्तराषाढा, श्रवण, धनिष्ठा, शतभिषा, पूर्वाभाद्रपदा, उत्तराभाद्रपद, रेवती इति ।

एतेषां ग्रहाणाञ्च नक्षत्रपिण्डानां ज्योतीषि इत्यपि संज्ञा अस्ति यतो हि एतेषु ज्योतिः (प्रकाशः) वर्तते ।

भारतीयविद्यानां मध्ये खगोलविज्ञानस्य चर्चा प्राचीनकालादेव प्रवर्तते । वराहमिहिरप्रभृतयो विद्वांस आकाशे विचरतां ग्रहनक्षत्रदीनां गतिसङ्क्रमणप्रभवान् विज्ञाय मानवानामुपरि कः प्रभावो भवतीति सम्यक् विज्ञापितवन्तः । अनन्तरं बहुभिरन्यैः ज्योतिषशास्त्रविद्भिः स्वमतानुसारेण अनेके ग्रन्थाः प्रणीताः ते सर्वे ज्यौतिषशास्त्रस्य विविधविषयान् उद्घाटयन्ति । एतान् ग्रन्थान् आश्रित्य महाकवेः कालिदासस्य साहित्येऽपि बहुत्र ज्योतिषशास्त्रविषयक–नक्षत्रसम्बन्धिविचाराः वर्णिताः सन्ति । रघुवंशे

गुरुं प्रति गच्छतो सुदक्षिणादिलीपयोरनिर्वचनीयशोभा तथैवासीद्यथा तुषारनिर्मुयोश्चित्रचन्द्रयोः सुषमा जायते ।

**काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः।**
**हिमनिर्मुयोर्योगे चित्रचन्द्रमसोरिव ॥**

रघु.1 / 46

पूर्णिमायां चित्रनक्षत्रेण सह चन्द्रस्य संयोगश्चौत्रमासे भवतीति ज्यौतिषसिद्धान्तः । यदा चौत्रमासस्य पूर्णिमायां चित्रनक्षत्रे चन्द्रमाः तिष्ठति तदा तुषारपातोऽपि न भवति वसन्तागमनात् ।

**चौत्रमासानां नामानि नक्षत्रनाम्नैव प्रसिद्धानि ।**

सूर्यसिद्धान्तकारेण कथितम् -

**नक्षत्रनाम्ना मासास्तु ज्ञेयाः पूर्वानुयोगतः। सू.सि. - १४/१६**

यथा चौत्रमासस्य पूर्णिमायां वैशाखमासस्य पूर्णिमायां विशाखानक्षत्रमित्यादिकालिदासः प्रतिमासपूर्णिमायां कस्मिन् नक्षत्रे राशिः तिष्ठति इति रहस्यमपि जानातिस्म । रघुवंशे तेनोक्तं पुष्यनामधेयं पुत्रं पुष्यनक्षत्रयुक्तायां तिथौ पुष्यरागमणिनिर्जितप्रभम् अर्थात् प्रभया निर्जितः पुष्यरागैः मणिविशेषैः येन तम् । पुष्यं पुष्याख्यमसूत द्वितीयं पुष्यनक्षत्रम् इव पुष्यनामधेयं पुत्रः - सुतः तस्मिन् जाते जनैः उत्सवाश्च कारिताः

**तस्य प्रभानिर्जितपुष्यरागं पौष्यां तिथौ पुष्यमसूत पत्नी ।**
**तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जना पुष्य इव द्वितीये ॥**

रघु.18 / 32

अत्र पुष्येण युक्तस्य कालस्य पौषमासस्योल्लेखः कृतोऽस्ति । पुष्यनक्षत्रे जातस्य राज्ञः पुत्रस्य पुरुषस्य शुभलक्षणानि भवन्तिा । सुतः पुष्यः शुभफलोपेतः बभूव । पुष्यनक्षत्रजातस्य फलमुक्तं वराहमिहिरेण -

**'शान्तात्मा सुभगः पण्डितो धानी धर्मसंश्रितः पुष्ये।'**

बृ.सं. - 101/5

इत्थमेव कुमारसम्भवे पार्वत्या विवाहकाल उत्तराफाल्गुनी-नक्षत्रमासीत् । नक्षत्रमिदं विवाहनक्षत्रेषु ज्योतिषशास्त्रे पठितम् । वस्तुतः कालिदासः नक्षत्राणां ताराणां संख्यामपि सम्यक्तया जानातिस्म यथा तेनोक्तं रघुवंशे - पुनर्वसुनक्षत्रस्य तारकद्वयमिव स्वर्गात् पृथ्वीमागतौ

रामलक्ष्मणौ । पश्यतां मिथिलानिवासिनां मनांसि नेत्रपक्ष्मपतनमपि सोढुं न अर्हन्ति –

**तौ विदेहनगरीनिवासिनां गां गतामिव दिवः पुनर्वसु।**
**मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चितं मनः ॥**

रघु. 11 / 36

**अत्र पुनर्वसुनक्षत्रस्य द्विवचने प्रयोगस्तारका द्वयं सूचयति ।**
**महाभारतेऽपि पुनर्वसुनक्षत्रस्य द्वे तारके कथिते –**
**तावुभौ धर्मराजस्य प्रवीरौ परिपार्शवतः।**
**रथाभ्यासे चकाशेते चन्द्रस्येव पुनर्वसुः॥**

महा. कर्णपर्वणि 49 / 28

अर्वाचीनज्योतिर्विदः पुनर्वसुनक्षत्रे चतस्रः ताराः इति मन्वते । प्राचीनगणका नक्षत्रेऽस्मिन् द्वे तारे अमन्यन्त । क्वचिच्च पुनर्वसुनक्षत्रे मतभेदात् पञ्चताराः उक्ताः द्वे तारे वा कथिते स्तः – 'पुनर्वसु नक्षत्रं ग्रहकारचतुस्तारं ग्रहकारपञ्चतारमित्यपरे, कुण्डलाकारद्वितारमिति गुरुः।'

भारतीयज्यौतिषशास्त्रेपि उक्तम् – 'तैत्तिरीयश्रुतिनक्षत्रकल्प-बृहद्गार्गीयसंहिताखण्ड – खाद्यकशाकल्यब्रह्म – सिद्धान्तेषु पुनर्वसुभे द्वे तारे स्त इति कथितम् ।'

नारदसंहिता – रत्नकोशरत्नमाला – मुहूर्ततत्त्व – महूर्तचिन्तामणिग्रन्थेषु पुनर्वसु नक्षत्रे चतस्रस्ताराः कथिताः । वराहमिहिरेण अपि पञ्चताराः स्वीकृताः । अद्भुतसागरेऽपि पराशरस्य मतानुसारं पुनर्वसु द्वे तारे स्त इति कथितम् ।

कालिदासेनापि पराशरादिमुनीनां मतं गृहीत्वा पुनर्वसुभे ताराद्वयस्य सङ्केतोऽकारि । यदि पुनर्वसु नक्षत्रे चतस्रः ताराः सन्ति इति आधुनिकमतं स्वीकुर्यात् तर्हि अपि पुनर्वसोर्योगतरा संख्या द्वित्वमेव भजते यथा – वराहमिहिरेण – पुनर्वसोर्दक्षिणोन्तरे तारे ।

एतस्मात् अत्र कालिदासेन नक्षत्रसम्बन्धिविचारो ज्योतिष-शास्त्रानुसारमेव प्रस्तुतः । एतदतिरिक्तं विशाखानक्षत्रस्य तारकविषये अभिज्ञानशाकुन्तले तृतीयाङ्केऽपि दुष्यन्तः कथयति – किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेतेति ।

एवमेव विक्रमोर्वशीये तृतीयाङ्के रम्भा कथयति यदेकतश्चित्र-लेखामपरतश्चोर्वशीं गृहीत्वा राजर्षिः पुरूरवा विशाखाभ्यां सह चन्द्र इव शोभते -

सखि चित्रलेखाद्वितीयां प्रियसखीमूर्वशीं गृहीत्वा विशाखासहित इव भगवान् सोमः समुपस्थितो राजर्षिः ।

अत्र विशाखा शब्दः द्वित्वं बोधयति यद्यपि रत्नकोशरत्नमाला-मुहूर्तचिन्तामण्यादिग्रन्थेषु विशाखा नक्षत्रे चतस्रः ताराः कथिताः किन्तु तैत्तिरीयश्रुतिनक्षत्रकल्पबृहद्गार्गीयसंहितादिग्रन्थेषु विशाखाभे द्वे तारे स्त इत्युक्तम् । एतस्मादेव विद्यामाधवीयस्य मुहूर्तदीपिकाव्याख्यानेऽभिहितं यत् विशाखानक्षत्रे चतस्रः ताराः सन्ति किन्तु क्वचिच्च पञ्च तारा अपि कथिताः क्वचिच्च द्वे तारे अपि दैवज्ञैः कथिते ।

वल्लालसेनेनाडद्भुतसागरे प्राचीनानां पाराशरादीनां मतम् उल्लिखितम् । तत्र प्रत्येकं नक्षत्रस्य प्रतितारापीडनवशात् देशवासिपीडा-फलमभिहितं तत्रापि विशाखानक्षत्रस्य द्वे तारे उक्ते - विशाखोत्तरतारोपसर्गे कोसलेक्ष्वाकव उपसृष्ट्यन्ते । इतरायां भ्रातरो विभक्ताः कुरवश्च । युगपदुपसर्गे यमजाः ।

अनेन विशाखानक्षत्रमपि द्वितारायुक्तम् अवगम्यते पुरातनज्योतिर्विदां मतानुसारेण महाभारतेऽपि विशाखानक्षत्रस्य द्विवचने प्रयोगः तस्मिन् तारकाद्वयं सूचयति । एतस्मात् एव कालिदासोऽपि विशाखाभस्य पुनर्वसुभस्य च द्वितारकामानं विलिख्य ज्योतिषशास्त्रस्य खगोलविज्ञानस्यापि परिचयं ददौ । कालिदासेनात्र तारकसंख्यादिनक्षत्र-सम्बन्धि यद् ज्ञानं प्रदर्शितम्, तत् वराहमिहिरात् प्राचीनमेव भवितुमर्हति ।

**सहायकाचार्य,**
**ज्योतिषविभागः**
**राष्ट्रियसंस्कृतसंस्थानम्,**
**गुरुवायूरपरिसरः**



# गृहनिर्माणे भूमिविमर्शस्य प्रयोजनम्

डा. सुभाषचन्द्रमिश्रः

अद्यतन समाजे सर्वमान्यवास्तु शास्त्रं साक्षात्प्रजापतेः प्रादुर्भूतम् । सृष्टियुत्पत्तिविषयकश्रुतिषु पञ्चमहाभूतप्रादुर्भावविषये उक्तं यत् आत्मनः आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, आगनेरापः, अद्भ्यः पृथिव्योरोत्पत्ति भवति । सृष्टिरोत्पत्ति समेषां पञ्चमहाभूतानां पञ्चीकरणात् भवति । समुचितस्थानाद् भवनेषु च तेषां सौख्यादिकं वर्धते । वास्तुनिर्माणे भूमिविचारः अत्यावश्यक विषयः वर्तते । भूमि विचार विना यदा निर्माणकार्यं भवति तर्हि सैव निर्माणं दिक्मूढं भवति, अस्मिन गृहे ये गृहस्वामिनः निवसन्ति, तस्य कुलस्य नाशः अवश्यमेव भवति, तत्र कोऽपि शंसय नास्ति । यदालिखितं वर्तते-- वास्तुसौख्यम् -

**प्रासादे सदनेऽलिन्दे द्वारे कुड्यि विशेषतः ।**
**दिङ्मूढ़े कुलनाशः स्यात्तस्ताम् संसाध्येद्दिशम् ॥**

वास्तुशास्त्रस्यावयश्कता विषये वृहद्वास्तुमालायां अपि लिखितम् वर्तते -

**स्त्रीपुत्रादिकंभोगसौख्यजननं धर्मार्थकामप्रदम् ।**
**जन्तूनामायनं सुखास्पदमिदं शीताम्बुधर्मोपहम् ॥**
**वापी देव गृहादिपुण्यमखिलं गेहात्समुत्पद्यते ।**
**गेहंपूर्वमुशन्ति तेन विबुधाः श्रीविश्वकर्मादयः ॥**

अनेन् विज्ञायते यत् वास्तुशास्त्र्य प्रथमय कर्ता श्री विश्वकर्मा एव।

**यत्र मनुष्य वसति निवसति च सैव वास्तु ।**

मत्स्यपुराणे वास्तुविषयक ज्ञानं सविस्तरेण वर्णितं दृश्यते । तत् मतानुसारेण भूमि चतुर्विधं भवति । प्रथमा ब्राह्मणी भूमि, द्वितीया क्षत्रिया भूमि, तृतीया वैश्याभूमि, चतुर्थी शूद्राभूमि भवति । तेषां भूमौ सुगन्धयुक्ताभूमिः ब्राह्मणी, रक्तगन्धाभूमिः क्षत्रिया, मधुगन्धाभूमिः वैश्याभूमि एवं च मद्यगंधभूमि शूद्राभूमिः भवति । रसानुसारेणऽपि भूमि

विचारः भवति । रस षड् प्रकारकाः सन्ति, तत्र मधुराभूमि ब्राह्मणभूमिः, कषाया क्षत्रियाभूमिः, अमला वैश्याभूमिः, तिक्ताभूमि शूद्राभूमि भवति । यथोक्तं –

**पूर्वं भूमि परीक्ष्येत पश्चाद्वास्तुं कल्पयेत ।**
**श्वेतारक्ता तथा पीता कृष्णा चौवानुपूर्वशः ॥**
**विप्रदः शस्यते भूमिः अतः कार्यं परीक्षणं ।**
**तिक्ताकषाया च तथा बैश्यशूद्रेषू शस्यते ॥**
**अरत्नि मात्रे वै गर्तै स्वनुलिप्ते च सर्वशः ॥**

वास्तुसौख्यम् ग्रन्थानुसारेण –

**क्षेत्रेमादौ परीक्ष्येत गन्धावर्णरसप्ल्वैः ।**
**सुमध्वाज्यान्नपिषितं गन्धं विप्रानुपूर्वकम् ॥**
**सितेषद्रक्तहरित कृषणा वर्णा यथाक्रमाम् ।**
**मधुरं कटुकं तिक्तं कषायरस सन्निभं ॥**

अग्निपुराणानुसारेण भूमि लक्षणं अस्मिनैव प्रकारेण भवति । ब्राह्मणी भूमिः सुगन्धा, मधुस्वादयुक्ता एवं च शुक्लवर्णा भवति । क्षत्रिया भूमिः रक्तवर्णा, कषायस्वादयुक्ता, रक्तगंधा भवति । अम्ला, तिलतैल गंधयुक्ता भूमि वैश्याभूमि भवति, परञ्च तिक्तस्वादयुक्ता कृष्णवर्णा भूमि शूद्रा भूमि भवति । वास्तुलक्ष्य प्रवक्ष्यामि विप्रादीनाञ्च भूरिह ।

**श्वेतरक्ता तथा पीता कृषणा चौव यथा क्रमात् ॥**
**घृत रक्तान्नमद्यानां गन्धाष्या रसतरचभूः ।**
**मधूरा च कषाया अम्लाद्युपरसा क्रमात् ॥**

वास्तुशास्त्रकारमतानुसारेण ब्राह्मणादीनां, सत्ववृत्तीनां मनुष्याणां कृते श्वेतवर्णा, घृतगंधा–स्वादयुक्ता भूमिः समीचीना भवति । अस्यां भूमौ मिथ्याभिमानं, अहंकारं, मद–मोहं नास्ति । अतः सात्विक जनानां कृते एषा भूमि योग्या भवति । अयं भूमि सत्वगुणयुक्ता भवति ।

क्षत्रियजनानां मनोवृत्ति रजोगुणयुक्ताः भवति । अतः रजोगुण प्रधानादीनां, सैनिकादीनां, आरक्षकादीनाञ्च कृते रक्तवर्णीयां, कषायस्वादयुक्ता, रक्तगंधिनी भूमिः क्षत्रियत्वं एव जनयिष्यति अतः

सैनिकानां, शूरवीराणां च निवासाय, बलोन्मादाय एषा भूमि सर्वथा अनुकूला ।

वैश्यजनानां मुख्यावृत्तिर्भवति व्यवसायः, अतः व्यवसाय वर्द्धनाय, वणिजकर्मणे तिलतैलयुक्ता, अम्लस्वादयुक्ता भूमिः उपयुक्ता भवति । अस्यां भूमौ सत्व-रज प्रधानत्वं दृश्यते, क्वाचित रज-तममिश्रणं अऽपि द्रष्टु शक्यते । एतेषां कृते व्यापार वर्धनाय अयं भूमि अतीव शुभदा भवति ।

सेवारत जनानां कृते तमोगुणयुक्ता भूमि अतीव शुभकारकः भवति । अस्यां भूमौ परिश्रम शीलाः सेवा भावना जनयति । सेवाकार्ययुक्ताः जनानां कृते एषा भूमिः तमोगुणयुक्ता कृष्णवर्णा, मद्यसुगन्धयुक्ता (मत्स्यसुगन्धयुक्ता), तिक्तस्वादयुक्त निम्न जनानां कृते उपयोगिनः भवति । मधुरस्वादयुक्ता, श्वेतवर्णा भूमि सर्वेषां जनानां कृते, अर्थात् चतुर्वर्णानां कृते अत्यन्तं उपयोगिनः सिद्धयति । एतादृशी समतलाः, दक्षिण-पश्चिम दिशि उन्नता, श्वेतवर्णा, मधुर स्वादयुक्ता भूमिः सुखं शान्तिञ्च वर्धयति कल्याणं करोति ।

**भूमिपरीक्षणम् -**

पुराणानुसारेण भूमि परीक्षणम् चतुर्विधं करणीयम् ।

**गन्धपरीक्षणम् -**

ब्राह्मण वर्णानां कृते घृतगंध, क्षत्रिय जनानां कृते मधुगंधा, वैश्यवर्णानां अन्नगंधा एवं च शूद्रवर्ण कृते रक्तगंधाभूमिः शुभफल दायिनी सम्पत्तिकारकः भवन्ति ।

**वर्ण परीक्षणम् -**

ब्राह्मणानां कृते श्वेत भूमि, क्षत्रियाणां रक्तभूमिः, वैश्याय पीत भूमिः, शूद्राय कृष्णभूमि प्रशस्ता भवति ।

**रसपरीक्षणम् -**

ब्राह्मणाय-क्षत्रियाय-वैश्याय-शूद्राय क्रमानुसारेण मधुरा-कषाया-अम्ला-कटूतिक्त स्वादयुक्ताभूमि शुभकरी भवति ।

**प्लव परीक्षणम्**

गर्तविधिमाध्यमेन परीक्षणम् – भवनस्य निर्माणाय यथानिर्दिष्टं स्थानोपरि हस्तमेकं गर्तं खनित्वा निशादौ जलं प्रपूरयेत् प्रातर्दृष्टे यदा जलं स्यात् तर्हि वृद्धिः, यदा पङ्क तर्हि समं, यदा गर्ते व्रणं स्यात् तर्हि क्षयं इति ज्ञायते । अस्मिनेव प्रकारेण प्रातः परीक्षण समये यदा जलं शेषरूपेणास्ति तर्हि उत्तमं, यदा पङ्कमेवास्ति तर्हि मध्यमं, यदा शुष्कमस्ति तर्हि अधमं ज्ञेयम् ।

**भूमिपरीक्षणम्** – **यथोक्त** –

**शस्तौषधि द्रुमलता मधुरा सुगन्धा,**
**स्निग्धा समान सुखदा च महानराणां ।**
**अप्यध्वनि श्रमविनोदमुपतानाम,**
**धत्येश्रिय किमपि शास्वत मन्दिरेषु ॥**

वृहत्संहितायाः प्रकारान्तरेण भूमि परीक्षणं वर्णिमस्ति । तस्यमतानुसारेण शस्तौषधयः जाया जयन्ती जीवित पुत्रदयः द्रुमाश्च मधुरा लवणरसरहिता भूमिः, स्निग्धाभूमि, सुगन्धायुक्ता भूमिः, सुखकारकः भवति । यत्र

**भूमौ प्लवविचारः**–

प्लवत्वानुसारेण् भूम्याः शुभाशुभ् विचारः भवति । यदा भूमेः प्राकदिशिरूप्लवत्वं भवति तर्हि शुभकारकं भवति । परञ्च अस्मिनेव प्रकारेण अन्य दिशायां प्लवत्वम् अऽपि शुभकारकं भवति यथा – यदि पूर्वोत्तरदिशायां तथा उत्तरदिशायां प्लवनं जायते तर्हि अऽपि शुभकारकं भवति । यस्यां भूमौ पूर्वोत्तरदिशायां, पूर्वदिशायां, उत्तरदिशायां च प्लवनं भवति, साभूमिः भवन निर्माणाय योग्या भवति । परञ्च यदा कश्चित् भूमेः प्लवनं अग्नि दिशायां भवति, तर्हि साभूमिः गृहस्वामिनः कृते अग्नि भयं वर्द्धयति । यदा प्लवनं नैत्य कोणे भवति, तर्हि चौर भयं जानीयात्। यदि वायव्यकोणे प्लवनं अस्ति तर्हि अन्ननाशः, यदि पश्चिम दिशायां भुमेः प्लवनं अस्ति तर्हि शोकदायिनी भूमि जानीयात् ।

**ब्रह्माणादि वर्णानां कृते प्रशस्त भूमि** –

यदि भूमेः जलं उत्तर दिशायां प्रवहति तर्हि भूमिः ब्रह्मणादीनां कृते श्रेष्ठ भूमिं जानीयाम् । यदि भूमेः जलं पूर्वदिशायां प्रवहति तर्हि

भूमिः क्षत्रियाणां कृते श्रेष्ठा इति जानीयात् । यदि भूमेः जलं दक्षिणदिशायां प्रवहति तर्हि भूमिः वैश्यादीनां कृते श्रेष्ठ भूमिं जानीयत् । यदि भूमेः जलं पश्चिम - दिशायां प्रवहति तर्हि भूमिः शूद्रादीनां कृते श्रेष्ठ सुखदायिनी भवति ।

**भूमेर्गजपृष्ठादिविचारः -**

**गजपृष्ठभूमिः -**

या भूमि दक्षिणपश्चिमे नैऋत्ये तथा वायुकोणके उच्चा भवति तदा सा भूमि गजपृष्ठा भूमिः कथ्यते । गजपृष्ठभूमेः निवासाय सुखं वर्द्धयति, धानधान्यदायिनी, आयुवृद्धिकरी च एषा भूमिः भवति। यथोक्तम् -

**दक्षिणे पश्चिमेचैव नैऋत्ये वायुकोणके ।**
**एभिरूच्चा यदा भूमिर्गजपृष्ठाऽभिधीयते ॥**
**गजपृष्ठे भवेद्वासः स लक्ष्मी धनपूरितः।**
**आयुवृद्धिकरो नित्यं जायते नात्र संशयः ॥**

वृहद्वास्तुमालाः पृष्ठ 85 श्लोक 71,72

**कूर्मपृष्ठ भूमि-**

मध्ये अत्युच्चं तथा चतुर्दिशायां अतिनीचं भूमिः कूर्मपृष्ठ भवति । अस्मिन् भूमेः निवासेन नित्युत्साहं वर्धयति, सुखं भवति, एवञ्च गृही विपुल धन-धान्यमर्जयति ।

**मध्येऽत्युच्च भवेदत्र नीचं चैव चतुर्दिशम् ।**
**कूर्मपृष्ठा भवेद भूमिस्तत्र वासी विधीयते ॥**
**कूर्मपृष्ठे भवेद्वासो नित्योत्साहसुखप्रदः ।**
**धनधान्यं भवेत्तस्य निश्चितं बिपुलं धनम् ॥**

वृहद्वास्तुमालाः पृष्ठ 86 श्लोक 73,74

**दैत्यपृष्ठा भूमि -**

या भूमि पूर्वाग्निईशानकोणेषु उन्नता भवति एवञ्च पश्चिमदिशायां अवनता नीचस्था भवति, तेषां दैत्यपृष्ट भूमि इति कथ्यते। अस्यां भूमौ निवासेन, धनहानिरेव, पुत्रपशुनाञ्चापि नाशः जायते ।

**पूर्वाग्निशम्भूकोणेषु उन्नतिश्च यदा भवेत् ।**

**पश्चिमे च यदा नीचं दैत्यपृष्ठोऽभिधीयते ॥**
**दैत्यपृष्ठे भवेद्वासो लक्ष्मीर्त्रनायाति मन्दिरे ।**
**धनपुत्रपशूनां च हानिरेव न शंसय ॥**

वृहद्वास्तुमालाः पृष्ठ 86 श्लोक 75,76

**नागपृष्ठभूमिः -**

पूर्वपश्चिमयोर्दीर्घा एवञ्च दक्षिणोत्तरयोः उच्चस्था भूमिः नागपृष्ठा भूमिः भवति । अस्यां भूमौ निवासेन उच्चाटनं जायते, पत्नी-पुत्रश्चहानि, पदे-पदे शत्रुवृद्धिरपि जायते । नागपृष्ठ भूमेः निवासेनमृत्युः निश्चयेन भवति -

**पूर्वपश्चिमयोदीर्घो दक्षिणोत्तर उच्चकः।**
**नागपृष्ठं विजानीयात्  कर्तुउच्चाटनं भवेत् ॥**
**नागपृष्ठे यदा वासो मृत्युरेव न शंसयः ।**
**पत्नीहानि पुत्रहानिः शत्रुवृद्धि पदे-पदे ॥**

वृहद्वास्तुमालाः पृष्ठ 86,87 श्लोक 77,78

**आयतादिक्रमेणशुभाशुभविचारः -**

भूम्यानां आकृतिः विभिन्न प्रकारकाः भवन्ति । यथा - आयताकारः, वर्गाकारः, चक्राकारः, शकटाकारः दण्डाकारः सूर्पाकारः धनुषकारः, विषमाकारः, त्रिकोणाकारः, भद्राकारः, गोमुखीः, व्याघ्रमुखीः आकृति इत्यादिनः । विभिन्न प्रकारस्याकृत्यानुसारेण भूम्यां शुभाशुभं विचार्यते । शुभभूमौः निवासेन सर्वार्थसिद्धि जायते, धनागमः वृद्धिश्च भवति, एषा भूमि कल्याणकारी भवति । परञ्च अशुभं भूमौ निवासेन सा भूमि दारिद्रयशोकप्रदा, राजभितिकारकः, धननाशिनी, क्षयकरी, एवञ्च गवादीनां, पशुनां कृते भयप्रदा भवति । यथोक्तम् विश्वकर्माप्रकाशे-

**चतुरस्रां द्विपाकाशं सिंहोक्षाश्वेभरूपिणीम् ।**
**वृतञ्च भद्रपीठञ्च त्रिशुलं लिङ्ग सन्धिकम् ॥**
**प्रासाद ध्वजकुम्भादिदेवानामपि दुर्लभम् ।**
**त्रिकोणां शकटाकारं सूर्पव्यञ्जन सन्निभम् ।**
**मुरजाकार सदृशां सर्पमण्डूकरूपिणीम् ॥**
**खराजगरसङ्काशां बकाञ्चिपिट रूपिणीम् ।**

**मुद्‌गराभां तथोलूककाकसर्पनिभां तथा ।**
**शुकरोष्ट्राज सदृशां धनुरूपरशुरूपिणीम् ॥**
**दृकलासशवाकारां दुर्गम्या च विवर्जयेत् ॥**

चतुरास्त्रं हस्तिसदृशां सिंहाश्ववृषभसदृशां वृत्ताकारां भद्रपीठं त्रिशूलाकारां लिङ्‌ग सदृशी भूमिः गृहर्माणाय योग्या भवति । विश्वकर्मामते प्रासाद ध्वज कुम्भादिसदृशी भूमिं देवानामपि दृते दुर्लभं वर्तते । अतः एषा भूमि गृह निर्माणाय सर्वथा योग्या वर्तते भूम्याकारं **तस्य फलञ्च चक्रम्** –

सर्वार्थ सिद्धिः धनागमः बुद्धि बृद्धिः कल्याणम् दरिद्रता शोकः राज्य भयम् धन नाशः पशु क्षयः गोधन नाश पीड़ाः महाभयम् फलम् आयतम् चतुरस्रम्  वृत्तम् भद्रा सनम् भद्रः विषमः त्रिकोणः शकटरूः दण्डः शुर्पाकारः शकटः दण्डः भूमिनाम

**आयते सिद्धयसर्वाचतुरस्रे धनागमः ।**
**वृत्ते तु बुद्धिवृद्धि स्यात् भद्रे भद्रासनं भवेत् ॥**
**चक्रेदारिद्यांमित्याहुर्विषमे शोक लक्षणम् ।**
**राजभिति  त्रिकोणस्याच्छकटे तु धनक्षयः ॥**
**दण्डे पाशुक्षयं प्राहुः शूर्पेवासे गवांक्षयः ।**
**गोव्याघ्रबन्धनेपीड़ा धनुः क्षेत्रे भयंमहत् ॥**

वास योग्याभूमिः – यस्यां भूम्यौ मनसः चक्षुषश्च तुष्टि प्रजायते सा भूमिरेव वास योग्या इति आचार्यौक्तम् । यत्र मनसः चक्षुषः तुष्टि आनन्दश्च प्रजायते सा भूमिः वासयोग्याः अस्ति इति जानियात् ।

या भूमिः वाल्मिंकियुक्ताः स्फुटिता, शल्य युक्ता अस्ति सा भूमिः वास योग्या नास्ति । ऊषरा भूमि धननाशं करोति । शल्ययुक्ता भूमिः क्लेशं ददाति, विषमाभूमिः शात्रुन्वर्धयति। गर्तयुक्ता भूमिः विनाशदायिनी भवति । कूर्माकार भूमौ निवासेन धनक्षयं भवति ।

**भूमेः सुप्तत्वादिविचारः**

गृहकर्ता ग्रामदिशा तथा स्वरयोगे त्रिभिर्भक्ते यत् शेषमायाति । शेषाङ्केन फलं जानियात् । एकेन शेषेन् जीविताभूमिः, द्वितीय शेषेन स्मृता भूमिः, तृतीय शेषेन राक्षसी भूमिः, सुप्ता, राक्षसी भूमिः

मृत्युदायिनी भवति । अस्मिनैव प्रकारेण लम्बायात योर्योगं कृत्वा ग्रामाक्षर योगेन यत फलमायाति तेन जीविता – मृताभूमिः जानीयात् । तत्र एकेन जीविता भूमिः, द्वितीयेन समः भूमिः तृतीयेन राक्षसी भूमिः, शुन्य शेषात मृत भूमिः जानीयात् । तृतीय प्रकारेण भूम्यक्षरं चतुर्गुणं कृत्वा तिथिवारञ्च योजयेत् । तेन् त्रिभिर्भागः प्रदातव्यः शेषेनफलम् कथयत् । तत्र एकेन जीविता भूमिः, द्विश्शेषे सम भूमिः, त्रिशेषे मृतभूमिं जानीयात्। शास्त्र वचनम् –

भूमेः सुप्तौ गृहवापी तडागादिकं नैव कर्तव्यम् ।

**सन्दर्भाः** –


1. वास्तुसौख्यम् 1/8 ।
2. वृहद्वास्तुमालायाम् पृ.1 श्लोक.3 ।
3. वृहद्वास्तुमालाः पृ–7 श्लोकः 37 ।
4. वास्तुसौख्यम् 1/3–84 ।
5. विश्वकर्मा प्रकाश अ.8, पृ.1 ।
6. वास्तुसौख्यम् पृ.3 ।
7. वास्तुसौख्यम् 1/6 ।
8. वास्तुसौख्यम् 1/19 ।
9. वृहद्वास्तुमालायाम् पृष्ठ 85/6 श्लोक 71 से 78 तक ।
10. वास्तुप्रबन्धः प्रबन्ध 87 ।



**डा. सुभाषचन्द्रमिश्रः**
**सहायकाचार्यः, ज्योतिषविभागः**
**राष्ट्रियसंस्कृतसंस्थानम् ( मा.वि. )**
**जयपुरपरिसरः ।**




# सद्योवर्षणविमर्शः

✍डा. स्वर्गकुमारमिश्रः,

**वृष्ट्यादिनानुगृह्णीमो मर्त्यान् शस्यादिसिद्धये ।**
**निष्पादितास्वोषधीषु मर्त्या यज्ञैर्यजन्ति नः॥**
**तोयवर्षेण हि वयं हविर्व्वर्षेण मानवाः ॥ ( १ ) इति**
**सूर्याद्धि जायते तोयं तोयात्शस्या निशाखिनः**
**तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः ॥ इति**

धूमज्योतिस्सलिलमरुतां दिवाकरकृतो यस्सन्निपातः स एव मेघरूपेणावतीर्णो जलं वर्षति । तज्जलमेव सृष्टेः मूलकारणमिति वृष्टिर्जातकस्य परमजीविका इति जातकशास्त्रविदो वदन्ति । अतोऽत्याधुनिका अपि मानवाः वृष्टिः कदाऽऽगमिष्यतीति ज्ञातुमिच्छन्ति । वष्टिं विना कदाचिदाकुला भवन्ति । समाधानमस्य चतुषष्ठ्यङ्गे ज्योतिश्शास्त्रे चिरं विलसतीति कृटत्वा तद्रहस्यं समुद्घाटयितुमयं मे प्रयत्नः । वर्षत्तोः परीक्षाप्रसङ्गे ज्योतिश्शास्त्रे बहुविमर्शः समुपलभ्यते । शास्त्रकाराणां मते मेघस्य गर्भधारणं चन्द्रयोगादेव भवति । प्रायो मार्गशीर्षे यन्नक्षत्रमुपगते चन्द्रे गर्भधारणं तस्मात्पञ्चनवते दिनशते प्रसवो भवतीति कृत्वा शुक्लपक्षगर्भः कृष्णपक्षे कृष्णपक्षस्य च गर्भः शुक्लपक्षे वर्षति । दिवाप्रभवो गर्भः रात्रौ रात्रिप्रभवश्च दिवसे पुनः सन्ध्याजातश्च सन्ध्यायां प्रसूते । कदाचिच्च मार्गशीर्षतः चैत्रं यावत्वृष्टिगर्भधारणं तत्र पुनः मन्दाधिकफलानि । अत्र गर्ग आह-

**माघेन श्रावणं विद्यान्नभस्यं फाल्गुने न तु ।**
**चैत्रेणाश्वयुजं प्राहुर्वैशाखे न तु कार्त्तिकम् ।**
**शुक्लपक्षेण कृष्णं तु कृष्णपक्षेण चेतरम् ।**
**रात्यह्नोश्च विपर्यासं कार्यं काले विनिश्चयम् ॥**[1]

पुनः पूर्वोद्भूताः मेघाः पश्चिमे पश्चिमोद्भूताश्च पूर्वे वर्षन्तीति एवमेव दशसु दिक्षु वैपरीत्येन सम्भवन्ति । भाद्रपदाद्वये उत्तरापूर्वाषाढयोः

रोहिण्याञ्चगर्भो यदा बहुतोयदो भवति अन्येषु नूनाधिकफलान्यधिगच्छति। तत्र द्रोणाढकवृष्टिपरिमाणोऽपि ज्योतिर्विद्भिः प्रमाणीकृतो वर्त्तते । किञ्च रोहिण्यादि योगफलमप्यत्र संगृहीताः भवन्ति । एवं स्थिते वृष्टिः कदा भविष्यतीति सामाजिकजातकमनसि जाग्रतः प्रश्नः अवश्यं समाधानीयो वर्त्तते ।

यथा मया प्रागुक्तं चन्द्रस्थितिरेव वर्षणे गरीयसी । चन्द्रस्य स्थितिं दृष्ट्वा एव तन्निर्णेतुं शक्यते । यदुक्तं वृहत्संहितायाम् –

**वर्षाप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो**
**लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।**
**सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः**
**प्रावृट्काले सृजति न चिराच्चन्द्रवद् भार्गवोऽपि ॥**[२]

कस्मिंश्चित्कृष्णपक्षे वर्षाप्रश्नं पृच्छति सति जलचरराशौ स्थितश्चन्द्रमा यदि लग्नगतोऽस्ति उताहो शुक्लपक्षे जलचरराशौ स्थितो केन्द्रगतो वा शुभग्रहेण दृष्टश्चेदधिकवृष्टिः पापग्रहे दृष्टे स्वल्पवृष्टिश्च शीघ्रमेव भवेदिति विवेकः ।

पुनः प्रकृतिरेव शिक्षिकास्ति । जलस्थलनभसां पशुपक्षीणाञ्च व्यवहारात्शकुनदर्शनेनापि वृष्टिविवेको भवितुमर्हति । प्रश्नकर्त्ता केनचित्प्रकारेण चेत् जलेन तत्संज्ञकवस्तुना सलिलशब्देन वा केवलं सन्निहितः तर्हि शीघ्रमेव वृष्टिर्भवति ।

सूर्यकिरणज्ञानेनापि वृष्टिसंज्ञानं भवितुमर्हति । यदि उदया-चलस्थः सूर्यः गलितकनकप्रभः स्निग्धवैदुर्यकान्तिस्तेन च दुर्निरीक्षः भवति अथवा मध्याह्ने अत्यन्ततीग्मरश्मिः तद्दिनं नूनं वृष्टिर्भवति ।[3]

पुनश्च यदि जलं स्वादरहितम्, गोनेत्राभमथवा काकाण्डाभं यदि नभः, विमला चेद्दिक्, लवणे चेद्विकृतिः, पवनश्चेन्निरुद्धः, झसानां चेत्स्थलगमनं, मेढकानां विलापश्चेद्वा तत्र जलवृष्टिरवश्यम्भाविनी भवति।[4]

एवञ्च जीवानां व्यवहारादपि वर्षणज्ञानं भवितुमर्हति । मार्जारश्चेन्नखैर्भूविदारणं कुरुत, लौहमलश्चेत्सविस्रगन्धः, मार्गे यदि बालानां सेतुबन्धः दृश्यते तर्हि शीघ्रमेव वृष्टिर्भवतीति सूचना लभ्यते । यदि पर्वताः अञ्जनचूर्णसन्निभाः, यदि वा वाष्पनिरुद्धकन्दराः एवञ्च

चन्द्रकिरणाश्चेदतिलोहिताः कृकवाकुलोचनापमाः तर्हि वृष्टिदाः भवन्ति ।[5] विना कारणं यदि पिपीलिकाभिः स्वण्डानिस्थानान्तरं प्राप्यन्ते अथवा गोप्लुतं जायते, यदि च अहिव्यवायो भवति, अथवा भुजङ्गमो वृक्षमारोहति तर्हि शीघ्रवर्षणं भवति । यदा तरुशिखरगतः कृकलासः आकाशे दृष्टिं करोति यदि वा गावः ऊर्द्ध्वमुखाः सूर्यं पश्यन्ति तदा वृष्टिर्भवति । एवमेव पशवः यदि गृहाद् बहिर्गन्तुं नेच्छन्ति श्रवण-खुरादिन्धुन्वन्ति तर्हि एतदपि वृष्टिं निर्दिशति । यदा गृहपटलेषु स्थिताः कुक्कुराः वियन्मुखाः रुदन्ति तदा यदि ऐशान्यकोणे विद्युद् दृश्यते तदा बहुजलवृष्टिद्वारा अचिरेण पृथ्वी जलप्लाविता भवति ।

प्रकृतेरध्ययनेनापि वृष्टिज्ञानं भवति । यथा शुककपोत-लाचनसन्निभे उताहो मधुनिभे चन्द्रे आहोस्वित्प्रतिचन्द्रे च नभे अचिरादेववृष्टिर्विज्ञेया । यदि रात्रौ मेघाः गर्जन्ति, दिने च दण्डाकृती रक्तवर्णा विद्युत्दृश्यते तथा पूर्वदिशि शीतलो वायुर्वहति तदा वर्षणं भविष्यतीति ज्ञायते । यदि लतानां नवपल्लवाः गगनोन्मुखाः, यदि वा जलपांसुभिर्विहगाः स्नायन्ते सरीसृपाश्चेत्तृणप्रान्तभागस्थिताः तदा शीघ्रवृष्टिसूचना लभ्यते । उक्तञ्च-

**वल्लीनां गगनतलोन्मुखाः प्रवालाः**
**स्नायन्ते यदि जलपांशुभिर्विहङ्गाः।**
**सेवन्ते यदि च सरीसृपास्तृणाग्राण्यासन्नो**
**प्रभूतपूटसञ्चया न तु चिरेण यच्छन्त्यपः ॥**[5]

एवञ्च मेघस्याकृतिं दृष्ट्वापि वर्षणानुमानं कर्तुं शक्यते । यदि सन्ध्याकालीकमेघाः मयूरशुकचाषचातकजपाकमलसमानवर्णाः जलोर्मिन-गनक्रकच्छपवराहमीनाकृतयश्च ते अपि वर्षणं शीघ्रमेव भविष्यतीति सूचयन्ति । यदि परितः शुभ्राः मध्ये कृष्णवर्णाः उपर्युपरिस्थिताः मेघाः सोपानमालासमानजलकणं क्षरन्तः पूर्वोद्भवाः पश्चाद्गामिनः पश्चाद्-भवाश्च पूर्वं गच्छन्तीति दृश्यन्ते तदा बहुजलवृष्टिं सूचयन्ति । तद्बृहत्संहितायां यथा-

**पर्यन्तेषु सुधाशशाङ्कधवला मध्येऽञ्जनालित्विषः**
**स्निग्धाः नैकपुटाः क्षरज्जलकणाः सोपानविच्छेदिनः।**

**माहेन्द्रीप्रभवाः प्रयान्त्यपरतः प्राग्वाम्बुपाशोद्भवा**
**एते वारिमुचस्त्यजन्ति न चिरादम्भः प्रभूतं भुवि ॥**[6]

यदि सूर्योदये सूर्यास्ते वा परिघशक्रचापो[7] वा प्रतिसूर्यो वा रोहितशक्रचापो[8] वा परिवेषयुक्तौ चन्द्रभास्करौ वा दृश्यन्ते तदा बहुजलवृष्टिर्भवति । यदि उदयास्तकालीनं नभः तित्तिरपक्षसन्निभं भवेत्पक्षिगणाश्च मुदिताः गायन्ति तदा उदये एतद् दृष्टे दिवसे अस्तसमये दृष्टे च रात्रौ अतिवृष्टिर्जायते । (86) यदि सहस्रामोघकिरणाः अस्तपर्वतहस्तसदृशाः पुनः मेघाः तदा उत्तमवर्षणयोगो भवति ।

ग्रहाणां स्थितिं दृष्ट्वापि वर्षाज्ञानं भवति । यदि वर्षासु चन्द्रः शुक्रात्सप्तमे अथवा सूर्यपुत्रात् नवमे पञ्चमे वा स्थितः शुभग्रहैः दृष्टः भवति तदा जलागमनयोगो जायते । यदि सूर्यादग्रतो मन्दगतयः पश्चाच्च शीघ्रगतयो ग्रहाः भवन्ति तदा पृथ्वीजलप्लाविता भवति ।

एवञ्च यदि खद्योतः रात्रौ मेघसमीपं गच्छेत्तदा मेघाः केदारेऽधिकं वर्षन्ति । यदुक्तम् – **यदि वर्षति मेघे सायं गोमायो रटनं श्रूयत तदा सप्ताहं दुर्दिनायते ।**

एवमेव पुराणेषु अपि आसन्नवृष्टिसूचकानि लक्षणानि लभ्यन्ते । यथा कालिकापुराणे–

**मयूराः स्तनयित्नूनां शब्देन हृषिता मुहुः ।**
**केकायन्ति प्रतिवने सततं वृष्टिसूचकाः ॥**
**मेघोत्सुकानां मयूरश्चातकानां मनोहरः ।**
**श्रूयतां मतिमत्तानां वृष्टिसन्निधिसूचकः ॥**
**गगने शक्रचापेन कृतं साम्प्रतमास्पदम् ।**
**धारासारशरैः तापं छेत्तुं प्रतियथोद्गतः ॥**[11]

**सन्दर्भाः**

1. मार्कण्डयपुराणेपतिव्रतामाहात्म्यम् ।
2. गर्गसंहिता ।
3. वृहत्संहितायाम्, सद्यवर्षणोध्याय 17 ।
4. उदयशिखरसंस्थो दुर्निरीक्ष्योऽतिदीप्त्या
   द्रुतकनकनिकाशः स्निग्धवैदूर्यकान्तिः।

तदहनि कुरुतेऽम्भस्तोयकाले विवस्वान्
प्रतपति यदि चोच्चैः खं गतोऽतीव तीक्ष्णम् ।
वृहत्संहितायाम् /3/सद्यवर्षणोध्याये 28 ।

5. वृहत्संहितायाम् /4/सद्यवर्षणोध्याये 28 ।
6. वृहत्संहितायाम् /13/सद्यवर्षणोध्याये 28 ।
7. तत्रैव 15/28
8. परिघइतिमेघरेखासातीर्यग्भास्करोदयेऽस्तेवा ।। 19/47 वृहत्संहितायाम् ।
9. सुरचापखण्डमृजुयद्रोहितम्
10. शुक्लाः कराः दिनकृतोदिवादिमध्यान्तगामिनः स्निग्धाः ।
    व्युच्छिन्नात्रृजवोवृष्टिकरास्तेत्वमोघाख्याः ।।
11. कालिकापुराणे पञ्चदशाध्याये ।

**संविदाध्यापकः ( साहित्यविभागः )**
**राष्ट्रियसंस्कृतसंस्थानम् ( मा.वि. )**
**क. जे. सोमैया संस्कृतविद्यापीठम्**
**विद्याविहारः, मुम्बई - ७७**



# भारतीयज्योतिषशास्त्रे वृष्टिलक्षम्

✍डॉ. अनिरुद्धनारायणशुक्लः

विदितमस्ति ज्यौतिषशास्त्रस्य वैज्ञानिकत्वम् । ज्यौतिषशास्त्रस्य आधारभूताः नक्षत्रग्रहाश्च तदाधारिकृत्य आकाशीय घटना भौमिकीय घटना वा इति तु प्रत्यक्षमस्ति । उक्तमस्ति –

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम् ।**
**प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥**

तद् ज्यौतिषशास्त्रय त्रिषुस्कन्धेषु संहिता स्कन्धः अन्यतमम् । अस्मिन्संहिता स्कन्धे आकाशीयघटनायाः विषयः दरीदृश्यते । तत्र आकाशीयघटनाक्रमे वृष्टिः तु अन्यतमः । जानन्ति भवन्तः अस्माकं देशः कृषिप्रधानः देशः । अत्र कृषिकर्मणि वृष्टेः अत्यन्तावश्यकः अस्ति। तत्रापि कृषिकर्मणः पूर्वमेव वृष्टिज्ञानमावस्यकं वर्तते । यतोहि ये कृषकाः वर्तन्ते ते सर्वेऽपि पूर्ववृष्ट्यानुमानाधारिकृषिकर्मणि प्रवृत्ताः भवन्ति । तथा च बीजसंरक्षणादिकार्यं जलसंरक्षणादिकार्यं च कुर्वन्ति । आधुनिककाले ये खगोलीयवैज्ञानिकाः मैसमवैज्ञानिकाश्च वर्तन्ते । ते तु पञ्चसप्तादिनानि–पूर्वमेव सद्योवृष्टेः संकेतः प्राप्ताः, या कृषिकर्मणि लाभप्रदानास्ति । अतः वृष्टेः पूर्वसूचना कृषिकर्मणि अत्यन्तलाभप्रदा भवति ।

वस्तुतः वृष्टेः पूर्वसूचना तथा वार्षिकवृष्टेः ज्ञानं यदि वर्ष–आरम्भे स्यात्तदा कषिकर्मणः योजना, जलसंरक्षणादियोजना अधिकलाभप्रदा भवितुं शक्यते । वृष्टेः संकेतः ददति, तेन सङ्केतेन कृषकाः कथं बीजसंरक्षणादिकार्यं कृषिकर्मणः सज्जीकरणञ्च पानीयं जलसंरक्षणं वा करिष्यन्ति इति महान् प्रश्नः समाजे सम्प्रति अस्ति । अतः अस्य प्रश्नस्य समाधानः ज्यौतिषसंहितास्कन्धे एव दरीदृश्यते । उक्तमस्ति – कृषिपाराशरौ श्लोक सं. 1

**वृष्टिमूला कृषिः सर्वा वृष्टिमूलं च जीवनम् ।**
**तस्मादादौ प्रयत्नेन वृष्टिज्ञानं समाचरेत् इति ॥**

जानन्ति सर्वे समुद्रादि नद्याः जलं सूर्यरश्मयः एव वाष्परूपेण संगृह्य मेघस्वरूपे परिवर्तत्य ऊष्णवायोः संचरणेन समयानुसारं वृष्टिः करोति । परन्तु भगवान व्यासः भिन्नः सूक्ष्मः च विचारः स्थापितः । व्यासस्य विचारः केवलः सूर्यरश्मयः एव हेतुः नास्ति अपितु वृष्टेः कारणं सूर्यचन्द्रवायूरपि प्रमुखौ स्तः । वायुपुराणे भगवान् व्यासः वृष्टेः कारणं स्थापितम् तद्यथा –

**आदित्यपीतं सूर्याग्नेः सोमं संक्रमते जलम् ।**
**नाडीभिर्वायुयुक्ताभिर्लोकाधानं प्रवर्तते ।**
**यत् सोमात् स्रवते सूर्यं तदभ्रेष्वतिष्ठते ।**
**मेघा वायु-निघातेन विसृजन्ति जलं भूवि ।**

(वायुपुराणे 1/51/14-15)

अर्थात् सूर्यरश्मिना शोषितं जलं वाष्परूपेण अन्तिरिक्षे गच्छति तत्र चन्द्ररश्मिसंयोगेन जलम् आद्रं भूत्वा मेघस्वरूपे परिवर्तितः भूत्वा वृष्टिं करोति । अतः स्पष्टमस्ति सूर्यः जलं केवलं बाष्पं करोति तद्बाष्पः चन्द्ररश्मिसंयोगेन आद्रं भूत्वा मेघस्वरूपे परिवर्तितः भवति । तद्यथा –

**आदित्यरश्मिभिर्पीतं जलमभ्रेषु तिष्ठति ।**
**पुन पतति तद् भूमौ पूर्यन्ते तेन चार्णवा ॥**

कृषिपाराशरौ पृ. सं. 11, प्रो. रामचन्द्र पाण्डेय।

अपि च ज्योतिषशास्त्रे वृष्टिज्ञानस्य हेतवः पञ्च अवयवात्मकाः। 1. वायुः, 2. मेघः, 3. ग्रहचारः, 4. भूमिः, 5. सद्योवृश्चिचश्च तत्र च वायोः अपि भेदत्रयमस्ति ।1. पावकः, 2. स्थापकः, 3. ज्ञापकश्च । पावकवायुः विभिन्नेषु दिक्षु संवह्य वृष्टियोग्यमेघान् वृष्टिहेतुः प्रेरयति ज्ञापकवायुः वृष्टिं कारयति । तत्रापि वृष्टिजन्यमेघान् चतुर्धा विभाज्यते । प्रथम आवर्त्तकः द्वितीयः संवतकः, तृतीयश्च पुष्करः चतुर्थः द्रोणश्चेति । यथा

**आवर्तश्चैव संवर्त पुष्करो द्रोण एव च ।**
**चत्वारो जलदाः प्रोक्ता आवर्ताहि यथा क्रमम् ॥**

कृषिपाराशरौ पृ. सं. 22, रामचन्द्र पाण्डेय।

आर्वतमेघः एकदेशे वृष्टिं करोति, संवर्तः सर्वत्रवृष्टिः करोति, पुस्करमेघः अत्यल्पवृष्टिः करोति । द्रोणमेघश्च वृष्टिः एव न करोति । तत्र कः ? मेघः अस्ति तस्य किं फलम् । यथा –

**शकाब्दः वह्नि संयुक्तं वेदभागसमावृत्तम् ।**
**शेषं मेघं विजानीयात् आवर्त्तादि यथा क्रमम् ॥**

कृषि पाराशरौ पृ. सं. 22, रामचन्द्र पाण्डेय।

अर्थात् शकाब्दे त्री युतं चतुर्णा विभाजितं शेष संख्यानुसारम् आवर्त्तादि मेघाः भवन्ति । यथा 1938 + 3 = 1941, 1941/4 = शेष – 1 अर्थात् अष्टात्रिंशदोत्तर एकोनविंशति तमे शके आर्वतनायकः मेघेशः अस्ति, अस्मिन् मेघे एकदेशे (यस्मिन् स्थाने आकाशे मेघः स्यात्तस्मिन् देशे) वृष्टिः भवति । अथ च वायुना वृष्टिज्ञानं कथं भवति ? पश्चिमोत्तरदिशोः वायुः वृष्टिसूचकः तथा तथा पूर्वयाम्ययोः दिशोः वायुः अवृष्टिसूचकः अस्ति । यदा वायुसंवहः एव नास्ति तदा वृष्ट्याभावः। उक्तम् –

**सौम्यवारूणयोर्वृष्टिरवृष्टिःपूर्वयाम्ययोः।**
**निर्वाते वृष्टिहानिः स्यात्संकुले संकुलं जलम् ।**

कृषि पाराशरौ पृ. सं. 22, रामचन्द्र पाण्डेय

पुनश्च तदवृष्टिः दिने रात्रौ वा भविष्यति तदज्ञानार्थम् पञ्चदण्डात्मकस्य वृष्टिसम्बन्धी मासस्य दिनं भवति ।

अर्थात् एकमासस्य घण्टाद्वयं एका ईकाई वा दिनस्य सूचकं भवति । तद् घण्टाद्वयस्यात्मकदिनस्यपूर्वाधे यदि उपरोक्तं – पश्चिमोत्तर–दिशोः वायुप्रवाहः स्यादत्तदा वृष्टिः दिने भवति । उत्तरार्धे यदि पश्चिमोत्तरदिशोः वायुप्रवाहः स्यादत्तदा वृष्टिः रात्रौ भवति । अर्थात् एकस्मिन् मासे त्रिंशत् दिनानि (30 दिन) अतः घण्टाद्वयस्य (2 घण्टा) एकं दिनं तदा त्रिंशतदिनस्यं – 30 x 2 = 60 घण्टा भवन्ति । त्रिंशत् विभाजिते सति । 60/30 = 2 घण्टा । एक–एकदिनस्य मानं भवति । तत्र घण्टा द्वये प्रथमा घण्टा दिनस्य सूचकः द्वितीया घण्टारात्रेः । अतः प्रथमहोरायां वायुः चलति तदा दिने द्वितीयहोरायां रात्रौ वृष्टिः भवति ।

**वृष्टिगर्भलक्षणानि –**

ज्येष्ठमासस्य आषाढास्यादर्शतिथौ दिवा रात्रौ वा आकाशे मेघे दृष्टे सति वृष्टिकालेऽपि वृष्टिः न भवति । नात्र संशयः । उक्तमस्ति – नारदीयमयूरचित्रके –

**ज्येष्ठमासे दर्शतिथौ रात्रौ मेघः प्रदृश्यते ।**
**दिवसे वायुना वृष्टिर्जायते नात्र संशयः ॥**

**प्रश्नमाध्यमेन चन्द्राधारितवर्षाज्ञानम्**

वर्षाज्ञानप्रश्ने चन्द्र जलचरराशीस्थः लग्ने स्यात् अथवा शुक्लपक्षे जलचरराशौ स्थित्वा केन्द्रेषु (चतुर्थ-सप्तम-दशम) स्थितः चन्द्रः शुभग्रहेणदृष्टः स्याततदा शीघ्रैव अधिकवृष्टिः भवति । यदि पापग्रहण दृष्टः चन्द्रः स्यात्रदा अल्पवृष्टिः भवति । उक्तमस्ति बृहत्संहितायां सद्योवर्षणाध्याये श्लोक 1

**वर्षाप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्दो लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।**
**सौम्यै दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः प्रावृट्काले सृजति न चिराच्चन्द्रवद्भार्गवोऽपि ॥**

**लतादिभिः वृष्टिज्ञानम्** –

यदि लतानां नूतान पत्राणां मूखमूर्ध्वं स्यात् अथवा धूलिभिः (रेणूभिः) खगाः स्नानं कुर्युः अथवा सरीसृपाः (कृतिजातयः सर्पादि) तृणस्य प्रान्तभागे स्थितः स्यात्तदा शीघ्रवर्षा भवति । उक्तमस्ति –

**वल्लीनां गगनतलोन्मुखाः प्रवालाः स्नायन्ते यदि जलपांसुभिर्विहङ्गा ।**
**सेवन्ते यदि च सरीसृपास्तृणाग्राण्यासन्नो भवति तदा जलस्य पातः ॥**

बृहत्संहिता सर्धोवर्षणाध्यायः ।

**मेघगर्जनेन वृष्टिज्ञानम्** –

रात्रौ मेघगर्जनं स्यात् दिवा रूधिरस्य समानदण्डाकारविद्युत दृष्टः स्यात् तथा पूर्वदिशः शीतलवायुः प्रवहेत् तदा वर्षा भवति । उक्तमस्ति – बृहत्संहितायां सद्योवर्षणाध्यायः 12।

**स्तनितं निशि विद्युतो दिवा रूधिरनिभा यदि दण्डवत् स्थिताः ।**
**पवनः पुरतश्च शीतलो यदि सलिलस्य तदाऽगमो भवेत् ॥**

**एवमेव आषाढकृष्णपक्षस्य पञ्चमीतिथौ मेघश्छन्न चन्द्रः । दृष्टौ आगच्छेत् तदा वृष्टियोगः भवति ।**

**यथा - आषाढे कृष्णपक्षे च यष्टभ्यां रजनीपातेः ।**
**मेघः मध्ये च संयाति तदा पृथ्वीजलाकुला ।**

मयूरचित्रक षष्ठोऽध्यायः 4

**सद्योवृष्टिलक्षणम्** -

प्रभातकाले सूर्यनिकरकिरणे तीक्ष्णता स्यात् पीतवर्ण रश्मयः स्युः मेघः स्निग्धः तथा श्यामवर्णीयः स्यात्तदा शीघ्रवृष्टिः भवति ।

**प्रातः काले पीतरश्मिर्दुनिरीक्ष्यो भवेद्रविः ।**
**स्निग्धवैदूर्यकान्तिश्चैन्नेद्यो वृष्टिः प्रद स्मृतः ॥**

मयूरचित्रके अ. षष्ठः 6

**अन्यदप्याह**

यदि वर्षाकाले मध्याह्ने सूर्यरश्मयः प्रचण्डः दुःसहः वा स्यात् तथा सूर्यप्रभा तप्तवर्णः सदृशः स्यात्तदा तद्दिने वृष्टिः भवति । यथा

**प्रावृट्काले यदा सूर्यो मध्याह्ने दुःसहो भवेत् ।**
**तद्दिने वृष्टिदः प्रोक्तोद्रतुस्वर्णसमप्रभः ॥**

मयूरचित्रके अ. 5, श्लो. 7

**अन्यदप्याह**

यदि पवनः न वहेत् जले मत्स्याः त्वरन्तः अधोभागे गच्छेयुः मंडूकः ध्वनिः करोति तदा तत्कालैव अतिवृष्टिः संभवति ।

**न यदा वातिं पवनश्चस्थलं ( न्नं न्नं ) यान्ति झषादयः ।**
**शब्दं कुर्वन्ति मण्डूकास्तदा ( स्यात् ) वृष्टिरनुत्तमा ॥**

मयूरचित्रके, अ.5, श्लो. 7

**यदा श्वानः मार्जाराः श्वनैः भूमौ गर्त्तं कुवन्ति ।**
**लौहधातुना दुर्गन्धानुभूतिः स्यात्तदा जलवृष्टिः भवति ।**

**यथा**

**नखैर्लिखति मार्जाराः पृथिवीं च यदा भृशम् ।**
**लोहानास्मलनिचयो विस्रगन्धा यदा भवेत् ॥**

मयूरचित्र, अ. 5, श्लो. 10

**उपसंहार**

वस्तुतः विषयोऽयं बहुरूचिकरोऽस्ति । न तु मनुष्याः अपितु सृष्टेः विभिन्न-प्राणिनाऽपि वृष्टिकल्पना कुर्वन्ति । यथा वृक्ष-गुल्म-लता-पिपिलिका-सर्प-सरिसृप-गौ-वृषभ-कुक्कुरादयेभ्यो प्रभृति पर्वताः । ऋषयोऽपि एतदनुभवं प्रसूतवृष्टिज्ञानं सृष्टेः हित-आकांक्षया ग्रन्थेषु लिपिकृत-कृतवन्तः । वृष्टिविज्ञानानुकल्पितं मनुसहितं महर्षि गर्गः, अत्रिः, कश्यपः, वशिष्ठादि ऋषिभिः योगदानं कृत्वा ज्योतिर्विज्ञानदृष्ट्या कल्पितमस्ति । अतः उपरोक्तवृष्टिविषयकतथ्येन मानवानां जीवानां पशुपक्षिणां-कृषकानां वृष्टिविषयकसमाधानाय हिताय वा प्रस्तुतमस्ति शोधप्रबन्धोऽयम् । येन माध्यमेन वृष्ट्याकांक्षिताः वृष्टिकालज्ञानान्विता भवेयुः इति मे मतिः ।

**संविदाध्यापक ( ज्योतिष )**
**राष्ट्रियसंस्कृतसंस्थानम् ( मा.वि. )**
**क. जे. सोमैयासंस्कृतविद्यापीठम्**
**विद्याविहार, मुम्बई ।**



# भूकम्पलक्षणम्

श्री पुष्पेन्द्र रावत

**परिचयः**

भूकम्पः भू नाम पृथ्वी क्षिति व कम्पः नाम कम्पनं, दोलनं, चलनं वा भवति । अर्थात् पृथ्वीकम्पन्, क्षितिचलनं वेत्यर्थः । प्रायः वयमनुभवामः यत् भारयुक्तयानानां गमनेन, औद्योगिकयन्त्राणां सञ्चालनेन बृहदाकारपशूनां गमनेनापि भू चलनं करोति । परन्तु यानादिकारणेन भूमेः कम्पनं न प्रतिभाति न च विनाशकरणमस्ति । तथापि विनाशकारी भूकम्पस्य चर्चा क्रियते ।

विनाशकारी भूकम्पाः जगतितले यदा-कदा स्थानविशिष्टे भवन्ति । तत्र मानवीय-प्राकृतिकसौविध्यानां मानवानां, पशूनां, अन्येषां सर्वेषां जीवनां च महती हानि भवति ।

**भूकम्पकारणम्**

प्राचीनमतानुसारम् केचन मुनयः अवदन् यत् सागरे विद्यमानविशालतमजीवानां गमनागमनेन भूकम्पः भवति ।

गर्गादयाः मुनयः अवदन् यत् भूमेः भारवहनेन श्रान्तानां दिग्गजनां विश्रामवस्थायां कारणेन भूकम्पः ।

गर्गऋषिः अवदन् यत् वर्धमानः, सुवृद्धः, अतिवृद्ध, पृथुश्रवा च चत्वारः दिग्गजाः, ब्रह्मणः, आज्ञया पृथ्वीं धारयन्ति । तेषां श्रान्तया दीर्घश्वास चालनेन भूकम्पः ।

वशिष्ठादयः ऋषयः वदन्ति यत् आकाशवायु, वेगेन यदा पृथिव्यां पतति तर्हि तेन वेगेन तेन शब्देन व भूकम्पः भवति ।

अन्ये आचार्याः वदन्ति यत् भूकम्पस्य कारणं तु भिन्नमेव, न कोऽपि तदवलोकितः ।

**पराशराभिमतम्**

यते आचार्याः अवदन् यत् प्राचीनकाले पर्वताः उड्डयितुं समर्थोऽभवन् अर्थात् पर्वतानां पक्षाः आसन् । पक्षैः साहाय्येन पर्वताः उड्डयन्ति स्म, तेनैव कारणेन यदा पर्वताः पृथिव्यामुपरि अवतरन्ति स्म

तदा भूकम्पाः भवन्तिस्म । अनेनैव कारणेन दुःखिता पृथ्वी ब्रह्मपार्श्वे गतवती तत्र मही उक्तवती यत् भवता मे नाम अचला बोधिता, परं पर्वतानां प्रभावेण अहं कम्पमानो भवामि । तर्हि ब्रह्मादेशानुसारमिन्द्रेण पर्वतानां पक्षाः नाशिताः । परन्तु ब्रह्मेण उक्तं यत् पृथ्वेः जनानां शुभाशुभं द्योतनाय अहोरात्रौ च अर्धार्धे खण्डे वायुः अग्निः इन्द्रः, वरूणश्च एतैः चतुर्भिः देवैः भूकम्पनं क्रियते ।

**भूकम्पकारणसन्दर्भे आधुनिकाभिमतम्**

आधुनिकाः वैज्ञानिकाः ब्रुवन्ति यत् भूकम्पः

1. ज्वालामुखीकारणेन भवति । एतादृशः भूकम्पः प्रायः जापान न्यूजीलैण्डदेशे भवति ।
2. पृथिव्यां विद्यामानशिलाखण्डानां इतस्ततः गमनेन भ्कम्पः भवति ।
3. पृथिव्यां ऊर्ध्वस्थानं संकुचेन भूकम्पः भवति ।
4. नूतनसिद्धान्तानुसारेण तलानां परिवर्तनेन भूकम्पः सम्भवति ।

**प्राचीनाधुनिकमतेषु समानता**

उपर्युक्तबिन्दुभिः ज्ञातं यत् अग्निः (ज्वालामुखी) वायुः (गैस भूकम्पीयतरङ्गेति) इन्द्र सामुद्रिक पर्वताः (वरूणः) वा सम्मिलिताः एकैव वा सन्ति । अनेन ज्ञायते प्राचीनैः मुनिभिः यद् ज्ञानप्राप्तं तदज्ञानं न अशाधु । तैः आधुनिक वैज्ञानिकतया विस्तृतं विश्लेषणं न कृतं परं ते निष्कर्षः बोधने अवगमने च समर्थोऽभूवन् ।

**संहितोक्त नक्षत्रानुसारेणभूकम्पज्ञानम्**

**वायव्यमण्डलनक्षत्राणि** -

उ.फा., हस्त, चित्रा, स्वाती, मृगशिरा, पुनर्वसु, अश्विनी च नक्षत्राणि वायव्य मण्डले भवन्ति । एतेषु नक्षत्रेषु भूकम्पः यद् भवति सः वायव्य भूकम्पः इति ।

**आग्नेयमण्डलनक्षत्राणि** -

पुष्य, कृत्तिका, विशाखा, भरणी, मघा, पू. भा., पूर्वा. फा., एतेषां संज्ञा आग्नेयमण्डलम् ।

एतेषु नक्षत्रेषु भूकम्पः आग्नेयभूकम्पः भवति ।

**इन्द्रमण्डलनक्षत्राणि** -

अभिजित, श्रवण, धनिष्ठा, रोहिणी, ज्येष्ठा, उत्तराषाढा, अनुराधा च एतानि इन्द्रमण्डलसंज्ञकानि ।

**वारूणमण्डलनक्षत्राणि** -

रेवती, पूर्वाषाढा, आर्द्रा, श्लेषा, मूल, उ. भा., शतभिषा एतानि सप्तनक्षत्राणि वारूणमण्डल संज्ञकानि ।

**लक्षणम्**

**वायव्यमण्डललक्षणम्** -

वायव्यमण्डलनक्षत्रेषु भूकम्पः भविष्यति तर्हि एकसप्ताह पूर्वतः कानिचन विशिष्टानि लक्षणानि दरीदृश्यन्ते । ते च -

1. सम्पूर्ण नभः धूम्रवर्णयुक्तः भवति ।
2. धूलियुक्त वायु तीव्रवेगेन प्रवहति । वृक्षाः भूमौ पतन्ति ।
3. सूर्यस्य तेजः मन्दः प्रतीयते ।

   अतः उपरोक्त लक्षणानि यदि भवन्ति तर्हि सप्ताहान्ते उक्तनक्षत्रेषु भूकम्पः भवति ।

**आग्नेयमण्डललक्षणम्**

अत्र एक सप्ताह पूर्वतः लक्षणानि भवन्ति । ते च -

1. ताराणां खण्डनं भवति । उल्कापातं भवति ।
2. दिग्दाहः दृश्यते ।
3. तीव्रगत्या वायु प्रवहति ।
4. अग्निप्रकोपः भवति ।
5. दावाग्नि प्रज्जवलति ।

**इन्द्रमण्डललक्षणम्**

अत्र सप्ताहपूर्वे कानिचन लक्षणानि दृश्यन्ते - तानि च -

1. गतिशीलाः पर्वताकाराः मेघाः वर्षन्ति ।
2. मेघानां ध्वनिः गम्भीरा भवति ।
3. विद्युत अतीव तीव्रध्वनिं करोति ।
4. मेघा, धूम्रः, श्याम, अतिश्यामवर्णयुक्ताः भवन्ति ।

   गर्गानुसारं एतानि लक्षणानि प्रायः रात्रेः पूर्वार्धे भवन्ति ।

**वारूणमण्डललक्षणानि**

अत्र सप्ताहेक पूर्वतः

1. नभात् कृशराः धाराः पतन्ति ।
2. मेघानां वर्णः धूम्रः, श्यामः, अतीवश्यामः वा भवति ।
3. मेघः नूनमेव गर्जति ।
4. विद्युत् पुनः पुनः ध्वनिं करोति ।

गर्गानुसारं एतानि लक्षणानि निशायाः उत्तरार्धे भवन्ति । वायव्यलक्षणं दिवसस्य पूर्वार्धे भवन्ति । आग्नेय लक्षणानि दिवसस्य उत्तरार्धे भवन्ति ।

**भूकम्पफलम्**

**वायव्यफलम्** –

जनाः काशः ज्वरः पीडिताः भवन्ति । प्रकृतौ हानिरस्योपजायते तथा सस्यादि अन्नानां नाशः, वनस्पतीनां महद्नाशो जायते ।

**आग्नेयफलम्**

जलस्य न्यूनता भवति । वर्षायाः न्यूनता भवति, राज्ञानां द्वेषः भवति, त्वम् विकारः, ज्वरः, पाण्डुरोगः च भवन्ति ।

**इन्द्रमण्डलभूकम्पफलम्**

श्रेष्ठजनानां, राज्ञानां च हानि भवति ।

जीवाः उदरविकारेण, कण्ठरोगेण वमनेनादयैः रोगैः पीडिताः भवन्ति ।

**वारूणफलम्**

वारूणभूकम्पेन समुद्रनदीदेशानां च हानि भवति ।

**वेलामण्डलनियमः**

दिवस्यपूर्वार्धे वायव्यवेला (कालखण्डः) दिवसस्य उत्तरार्धे आग्नेयवेला, रात्रेः पूर्वार्धे इन्द्रवेला, रात्रेः परार्धे वारूणवेला भवति । यदा भूकम्पः स्वमण्डले स्ववेलायां भवति तदा भूकम्पस्य पूर्ण प्रभावः भवति।

**पराशरानुसारं वेलामण्डलयोः भिन्नतानुगुणं फलम्**

| | मण्डलम् | वेला | फलम् |
|---|---|---|---|
| 1. | वायव्यः | आग्नेयः | अग्निः उत्पातः, जीवाणु प्रकोपः |
| | आग्नेयः | वायव्यः | उद्भवति । |
| 2. | इन्द्रः | वायव्यः | प्रदेशानां हानि, पर्वतानां हानि |
| | वायव्यः | इन्द्रः | भवति । |
| 3. | वायव्यः | वरूणः | सीमान्त प्रदेशेषु पीडा भवति । |
| | वरूणः | वायव्यः | |
| 4. | ऐन्द्रः | आग्नेयः | चीनादि देशानां हानि भवति । |
| | आग्नेयः | इन्द्रः | |
| 5. | वरूणः | इन्द्रः | आर्यावर्तादि देशेषु जनानां हानि |
| | इन्द्रः | वरूणः | भवति । |

**मण्डलानुसारं भूकम्पस्य व्यापकता**

वायव्यमण्डलस्य भूकम्प (200) द्विशती योजनानि पर्यन्तं आग्नेयमण्डलस्य दशोधिकएकशतम् (110) योजनानि पर्यन्तं, वरूणमण्डलस्य अशीति अधिक एकशतम् (180) योजनानि पर्यन्तं, ऐन्द्रमण्डलस्य षष्ट्यधिकएकशतम् (160) योजनानि पर्यन्तं भूकम्पः भवति ।

**भूकम्पपुनरावृत्तिः**

भूकम्पानन्तरं पुनः तृतीये, चतुर्थे, सप्तम, विंशत, पञ्चदश, पञ्चचत्वारिंशत् दिवसे भूकम्पस् पुनः सम्भावना भवति ।

**परिक्षणम्/उदाहरणम्**

1. त्रयोविंशत्मुत्तरेकोनविंशतिशततमे वर्षे एक दिनाङ्के सेप्टेम्बर मासे भरणी नक्षत्रे आग्नेयमण्डले वायव्यवेलायां विनाशकारी भूकम्पः अभवत् । तत्र अग्नि (ज्वालामुखी) कारणेन एकलक्षः द्विचत्वारिंशताधिक जनानां मृत्यु अभवत् ।
2. एवमेव लाटूरमहाराष्ट्रभूकम्पः 30 सितम्बर 1993 तमे वर्षे अभवत् । तदा पू. भा. नक्षत्र (आग्नेयमण्डलम) अभवत् । अस्यागमनं वारूण वेलायां अभवत् । समयः (3.56) । अस्य

प्रभावेण त्रिंशत्, सहस्त्राणि जना तथा सौविध्यानां महती हानि अभवत् ।

3. बिहार भूकम्पः 15 जनवरी, 1934 अपराह्णे 2 वादने उत्तराषाढा नक्षत्रे अभवत् यस्य इन्द्रमण्डलम्, आग्नेयवेला आसीत् । तत्र भूम्यां महान् जलश्रोताः अभवन् येन महती हानि अभवत् ।

**सन्दर्भग्रन्थाः**


1. बृहत्संहिता ।
2. मेघमाला ।
3. भूकम्पलक्षणम् ।
4. मुहूर्त्तचिन्तामणिः ।
5. ज्योतिषशास्त्र का इतिहास ।



**शिक्षाशास्त्री द्वितीयवर्षम्**
**राष्ट्रियसंस्कृतसंस्थानम्**
**( मानितविश्वविद्यालयः )**
**क. जे. सोमैया संस्कृतविद्यापीठम्**
**विद्याविहारः, मुम्बई - ४०० ०७७ ।**


